सिच्य दधिक्राव्णोऽकारिषमिति दध्नस्त्रिः प्राश्नाति । चक्रीमिषाऽनडुहः पदं मामेवान्वेतु ते मनो मां च पश्यसि सूर्यं च । अन्येषु मनस्कृथा सोमेनादित्याः चाक्रवाकं संवननं तन्नौ संवननं कृतमित्यवशिष्टं पत्न्यै प्रयच्छति। तूष्णीं सा प्राश्नाति। अपराह्णे पिण्डपितृयज्ञः । स व्याख्यातः । संवत्सरं ब्रह्मचर्यं चरतः द्वादशरात्रं वा। अथास्यै गृहान् विसृजेत् । योक्रपाशं विषाय तौ सन्निपातयेत् । अपश्यं त्वा मनसा चेकितानं तपसो जातं तपसो विभूतं। इह प्रजामिह रयिं रराणः प्रजायस्व प्रजया पुत्रकाम। अपश्यं त्वा मनसा दीध्यानां स्वायां तनूं ऋत्व्ये नाथमानां । उप मामुच्चा युवतिर्बभूयाः प्रजायस्व प्रजया पुत्रकामे । प्रजापतिस्तन्वं मे जुषस्व त्वष्टा देवैः सहमान इन्द्रः । इन्द्रेण देवैर्वीरुधः संविदानां बहूनां पुंसां पितरः स्यावः॥ अहं प्रजा अजनयं पृथिव्यामहं गर्भमदधामोषधीषु । अहं विश्वेषु भुवनेष्वन्तरहं प्रजाभ्यो बिभर्मि पुत्रान् । इति स्त्रिया दीव्यत्या सञ्ज्ञपति ॥ करदिति भसदभिमृशति । जननीत्युपजनं । बृहदिति जातं । एतेन धर्मेण ऋतावृतौ संनिपातयेत् ॥

॥ इति वाराहगृह्ये अष्टादशः खण्डः ॥

## पुंसवनम् ।

अथाऽस्यास्तृतीये गर्भमासे पुंसा नक्षत्रेण यदहश्चन्द्रमा न दृश्यते तदहर्वोपोष्याप्लाव्याहतं वास आच्छाद्य न्यग्रोधावरोहशृङ्गान् उदपेषं दक्षिणस्यां नासिकाच्छिद्रे आसिञ्चेत् । हिरण्यगर्भोऽद्भ्यः संभूतः इत्येताभ्यां । अथाऽस्या दक्षिणं कुक्षिमभिमृशेत्—पुमानग्निः पुमानिन्द्रः पुमान् देवो बृहस्पतिः । पुमानग्निश्च वायुश्च पुमान्गर्भस्तथोदरे । पुमांसौ मित्रावरुणौ पुमांसावश्विनावुभौ । पुमांसं गर्भं जायस्व त्वं पुमानुपजायतां । इत्येताभ्यां ॥ अथास्याः पञ्चमे षष्ठे सप्तमे वा गर्भमासे माङ्गल्यैः स्नापयित्वा प्राजापत्येन स्थालीपाकेनेष्ट्वा जयप्रभृतिभिश्चाज्यस्य पुरस्तात्स्विष्टकृतः पश्चादग्नेर्दर्भेष्वासीनायाः सर्वान्केशान्विमुच्य त्वमग्ने मा भवसि यः कनीनां देवः स्वधा वो गुह्यं बिभर्षि । अञ्जन्ति विश्वं सुकृतं त-

पोभिः यद्दंपती समनसा कृणोमि ॥ इति नवनीतेन पाणी प्रलिप्य सर्वान्केशान्संप्रयौति । इन्द्राणी चक्रे कङ्कतं सीमन्तं विसर्पतु इति शलल्या शमीशाखया सपलाशया एकीकृत्य कङ्कतेन—अन्तर्वत्नी पुमांसं दीर्घं जीवन्तं शतायुषं । दीर्घायुरस्या यः पतिर्जीवाति शरदः शतं इति त्रिश्वेतया सीमन्तं करोति । अथास्याः पतिर्द्वेधा केशान् बध्नाति—नीललोहितेन सूत्रेण जीवोर्णया वा ॥

॥ इति वाराहगृह्ये एकोनविंशः खण्डः ॥

## वैश्वदेवकर्म ।

अथ वैश्वदेवं व्याख्यास्यामः । तत्र सायंप्रातःप्रभृतीनां अग्निहोत्रवत्परिसमुह्य पर्युक्ष्य परिस्तीर्य सायं प्रातः स्यादित्येके । हविष्यस्य वा सिद्धस्य वैश्वदेवः । अग्नये सोमाय प्रजापतये धन्वन्तरये वास्तोष्पतये विश्वेभ्यो देवेभ्यः अग्नये स्विष्टकृते च जुहुयात् । अवशिष्टस्य बलिं हरेत् । दधिमधुमिश्रस्य अग्नये पुरस्तात् यमाय दक्षिणतः सोमाय पश्चात् वरुणायोत्तरतः मध्ये वरुणार्यमभ्यां ब्रह्मणे चाग्नये पृथिव्यै वायवेऽन्तरिक्षाय सूर्याय दिवे चन्द्रमसे नक्षत्रेभ्य इत्यद्भ्यः कुंभदेशे ओषधिवनस्पतिभ्यः मध्यदेशे कामाय गृहपतये इति शय्यादेशे श्रियै च रक्षोजनेभ्योऽन्तः शरणे आकाशायेति स्थलिकांडाभ्यां तूष्णीं निष्क्रम्योपरि शरणे कव्यं प्राच्यां पितृभ्यः स्वधेत्यनुषजेत् । नम इत्यन्ते च ये ब्राह्मणाः प्राच्यां दिश्यर्हन्तु ये देवा यानि भूतानि प्रपद्ये तानि मे स्वस्त्ययनं कुर्वन्त्विति दक्षिणस्यां प्रतीच्यां उत्तरस्यामूर्ध्वायां ये ब्राह्मणा इति सर्वत्रानुषजेत् । स्नेहवदमांसमन्नं भोजयित्वा विदिशो ब्राह्मणानर्थसिद्धं वाचयेत् । बलिहरणस्यांते यामाशिषमिच्छेत् तामासीत । गृहपतिः ॐअक्षयमन्नमस्त्वित्याह । भिक्षां प्रदाय सायं भोजनमेव प्रातराशेत् । विप्रोष्य गृहानुपतिष्ठेत् ॥

॥ इति वाराहगृह्ये वैश्वदैविकः खण्डः ॥

## परिशिष्टम् ।

अतः परं परिशिष्टं मैत्रायणीयसूत्रस्य गृह्यमगृह्यपुरुषः प्रायश्चित्तानुग्रहिक–हौतृक–शुल्बिक–उत्तरेष्टिक वैष्णव–आध्वर्य-विकार्षक–चातुर्होतृक गोनामिक–अकुलपादरहस्य–प्रतिग्रहयमक–वृषोत्सर्ग–प्रश्न–द्रविण–षट्टारण–प्रधान–सान्देहिक–प्रवराध्याय–रुद्रविधान–च्छन्दोनुक्रमणी–अन्तःकल्प–प्रवासविधि–प्रातरुपस्थान–भूतोत्पत्तिरिति द्वाविंशतिः परिशिष्टसंख्यानाम् ॥

---

## पाकयज्ञाः ।

गृह्याग्नौ पाकयज्ञान् विहरेत् । ह्रस्वत्वात् । पाकयज्ञो ह्रस्वं हि-पाक इत्याचक्षते । दर्शपूर्णमासप्रकृतिः पाकयज्ञविधिः अप्रयाजानु-याजोऽसामिधेनिकः स्वाहाकारान्ते निगद्य होमाः परतंत्रोत्पत्तिर्द-क्षिणाग्नावाहिताग्निः गोमयेन गोचर्ममात्रं चतुरश्रं वा स्थंडिलमु-पलिप्येषुमात्रं तस्मिन् लक्षणं कुर्वीत सत्यसदसीति पश्चार्धादु-दीचीं लेखां लिखेत् । ऋतसदसीति दक्षिणार्धात् प्राचीं घर्मसद-सीत्युत्तरार्धात् प्राचीं मध्ये द्वे तिस्रो वा प्राचीः । ऊर्जस्वतीति द-क्षिणां । पयस्वतीत्युत्तरां । इंद्राय त्वेति मध्याद्वा सर्वाः प्रादेश-मात्र्यः दर्भेणावलिखेत् । अद्भिः प्रोक्ष्याग्निं सादयति । परिसमुह्य पर्युक्ष्य परिस्तीर्य तूष्णीमिध्माबर्हिस्सन्नह्य प्रागग्रैर्दक्षिणारंभैः उदक्संस्थैः अयुग्मैर्धातुभिस्तृणाति । दक्षिणतोऽग्नेः ब्राह्मणमुपवे-श्योत्तरतः उदकपात्रं बर्हिषः पवित्रे कुरुते । समिधावप्रच्छिन्न-प्रान्तौ दर्भौ प्रादेशमात्रौ पवित्रे स्थो वैष्णव्य इत्योषध्या छित्वा विष्णोर्मनसा पूते स्थ इत्यद्भिः त्रिरुन्मृज्य प्रोक्षणीधर्मैः संस्कृत्य प्रणीताः प्रणीय निर्वपणप्रोक्षणसंवपनमिति यथादैवतं चरुम-धिश्रित्य स्रुक्स्रुवौ प्रमृज्याभ्युक्ष्य अग्नौ प्रताप्य अद्भिरासिच्य अच्छिन्नपत्रेत्याज्यमग्नौ अधिश्रयति । पृश्नेः पयोऽसीति आज्यं नि-र्वपति । परि वाजपतिरित्याज्यं हविश्च त्रिः पर्यग्नि करोति । देव-स्त्वा सवितोत्पुनात्वित्याज्यं श्रपयति । तूष्णीमिध्मा बर्हिः प्रोक्ष्य

यथाम्नातमभि परिस्तृणाति। परिधीन् परिदधाति। ओजो-सीत्याज्यमवेक्ष्य पश्चादग्नेः दर्भेष्वासादयति। अभिघार्य स्थाली-पाकमुत्तरत उद्वासयति। सकृदेवेध्ममादाय विरूपाक्षः प्रथमो होमानां ब्राह्मणमामन्त्र्य समिधमादायाघारावाघार्याज्यभागौ हुत्वा युनज्मि त्वेति च योजयित्वा नह्यति। युक्तो वह इति हविर्ज्ञायते। कामं पुरस्ताद्धुरो जुहोति युक्तो वह जातवेदः पुरस्तादिदंविधिक्रियमाणं यथेह त्वं भिषग्भेषजस्यासि गोप्ता त्वया प्रसूता गामश्वं पुरुषं सनेमि स्वाहेति। विश्वाग्ने त्वया वयं धारा उदन्या इव। अति गाहेमहि द्विषमिति नक्षत्रमिष्ट्वा देवतां यजेत। अहोरात्रमृतुं तिथिं च अभिघार्य यद्दैवतं हविः स्यात् तज्जुहुयाद्यथादेवतं। यथादेवतया चर्चा आकूताय स्वाहेति जयान् जुहुयात्। प्रजापतिः प्रायच्छादिडामग्न इति स्विष्टकृतमुत्तरार्धपूर्वार्धे जुहुयात्। मेक्षणमुपयामं पवित्रे चान्वादध्यात् अन्वग्नो अनुमतिरन्विदनुमते त्वं भूःस्वाहेति प्रायश्चित्ताहुतीश्च। त्वं नो अग्ने स त्वं नो अग्ने मनो ज्योतिः त्रयस्त्रिंशत्तन्तवः अयाश्चाग्नेऽसीति च। इमं स्तनं मधुमन्तं धयाय प्रपीनमग्ने सलिलस्य मध्ये। उत्संजिषस्व मधुमन्तमूर्वी समुद्रं सदनमाविवेश स्वाहेति परिधिविमोकमभिजुहोति। अन्नपत इत्यन्नस्य जुहुयात्। एधोस्येधिषीमहि स्वाहेति समिधमादधाति। समिदसि समेधिषीमहीति द्वितीयां। बर्हिषि पूर्णपात्रं निनयेत्। एषोऽवभृथः पाकयज्ञानां। आपोहिष्ठीयाभिर्मार्जयित्वा पर्युक्षेत। वरो दक्षिणा। अश्वं वरं विद्याद्गामित्येके॥

॥ इति वाराहगृह्ये प्रथमः खण्डः संपूर्णः॥

॥ इति वाराहगृह्यमेकविंशतिखण्डैः समाप्तम्॥

बलिर्दातव्यः'। इति तेषां वचनं श्रुत्वा राजा जगाद—"भोः सभ्याः! 'अयं ममाश्रितः। पुरमार्गप्रदर्शनादुपकारी च। अतोऽस्मिन् गुणदोषचिन्ता न कार्या। उक्तं च—

चन्द्रः क्षयी प्रकृतिवक्रतनुः कळङ्की
दोषाकरः स्फुरति मित्रविपत्तिकाले।
मूर्ध्ना तथाऽपि सततं ध्रियते हरेण
नैवाश्रितेषु महतां गुणदोषचिन्ता॥ ९६॥

किं च

उपकारिषु यस्साधुः साधुत्वे तस्य को गुणः।
अपकारिषु यः साधुः स साधुः सद्भिरुच्यते॥" ९७॥

इति भणित्वा राजा देवदत्तमवलोक्य "सखे! भयं चेतसि मा कार्षीः। मम पुत्रो बळीयसा पुराकृतेन कर्मणा हतः। किं नाम त्वया कृतम्। प्राकृतं को वा लङ्घयितुं क्षमेत। तथाहि—

माता लक्ष्मीः पिता विष्णुः स्वयं च विषमायुधः।
तथाऽपि शम्भुना दग्धः प्राकृतं केन लङ्घ्यते?॥ ९८॥

अन्यच्च, महत्यरण्ये पतितं मां नगरमनीनयः किळ। अत्र प्रत्युपकारसहस्रैरपि न तावकमृणमपनेतुं प्रभवामि।" इति समाश्वास्य तं वस्त्राभरणादिना संभाव्य विससर्ज। देवदत्तस्तु परमानन्दभरितस्तं कुमारं स्वगृहादानीय राज्ञे ददौ। ततो विस्मितेन राज्ञा अभाणि—'देवदत्त! किमेवं कृतम्?' देवदत्तः—"भो राजन्! श्रूयताम्। त्वया सभामध्ये बहुबारं देवदत्तकृतादुपकारात् कथमुत्तीर्णो

भविष्यामीति भणितम् । अतस्तव चित्तपरीक्षणार्थं मयैवं कृतम् । त्वयि प्रत्ययो दृष्टः । क्षन्तव्योऽयमपराधः । " राजा—'यः कृतमुपकारं विस्मरति स एव पुरुषाधमः । ' देवदत्तः—"देव ! विनापि कारणं सकलजगतामुपकरोषि । ततस्त्वमेव सुजनो लोके । तथा चोक्तं—

ते सुजनास्ते धन्यास्ते कृतिनस्ते हि सुकृतिनो लोके ।
ये कारणं विनाऽपि च परहितकारणाय हन्त जीवन्ति " ९९॥

इति राजानं स्तुत्वा देवदत्तो राज्ञाऽनुज्ञातः स्वगृहमयासीत् ।

इति कथां कथयित्वा सालभञ्जिका भोजमब्रवीत् 'राजन् ! त्वय्येवमौदार्यं न विद्यते । तदिदमास्थातुं नार्हसि । ' तच्छ्रुत्वा राजा तूष्णीं निर्जगाम "

इति चतुर्थोपाख्यानम्.

---

## ॥ अथ पञ्चमोपाख्यानम् ॥

मणीननर्घान् वणिजः कुतोऽपि क्रीत्वा दशैतेष्वपि पञ्च नावे ।
भृत्याय दत्त्वाऽपततेऽवशिष्टान् ददौ स राजेति निगद्यतेऽद्य ॥

पुनरपि भोजे समागत्य सिंहासनसोपाने पादं विन्यस्यति, तावदन्या सालभञ्जिका निवार्य गिरमेवं व्याजहार—

विक्रमादन्यः कोऽपि नेदमारोढुमर्हति । तत्तुल्यश्चेदर्हति । श्रूयतां । ब्रवीमि तस्यौदार्यम् । विक्रमार्के महीं पालयत्येकदा कश्चिद्रत्नवणिक् समेत्य रत्नमनर्घमेकं राजहस्ते समर्पितवान् । राजा

देदीप्यमानं तदादाय परीक्षकानाकार्याभणत्-कीदृशमेतद्रत्नम् ? किय-न्मूल्यमर्हति ? निश्चित्य कथयत ।' परीक्षकास्तद्रत्नं साधु निरूप्य 'राजन्नमूल्यमेतद्रत्नम् । अस्य मूल्यं निर्णेतुं न कोऽप्यत्र प्रभवन्ति । तच्छ्रुत्वा राजा तस्मै भूरि द्रव्यं दत्वाऽब्रवीत्—'भोः सार्थवाह, किमीदृशमन्यदस्ति ?' वणिक्—'देव ! नात्र सन्ति, ग्रामे तु दश विद्यन्ते । यदि जिघृक्षा देवस्य, तर्हि प्रेषयिष्यामि । राजा तेषामेकै-कस्य चतुस्सहस्रं सुवर्णानि मूल्यं निर्णीय तावद्धनं दत्त्वा सहैव तेन चतुरमेकं भृत्यं प्रेष्य, अष्टभिर्दिवसैरत्राऽगच्छेरित्यादिदेश । सोऽपि 'यदाज्ञापयति देव' इत्याज्ञां शिरसि कृत्वा झडिति निर्जगाम । रत्नानि गृहीत्वा पुनरागच्छति च तस्मिन् मध्येपथं महती वृष्टिरा-सीत् । तया चोभयकूलपरिपूर्णा नद्येका प्रवहति स्म । तदुत्तरं तीरं गन्तुमशक्नुवन्नाविकमाहूयावदत् 'नाविक ! रत्नहरं मामिमां नदी-मुत्तारय' नाविकः—"अये पथिक ! यद्येषा नदी वेलामतिक्रम्य प्रवहति । कथमुत्तार्यताम् ? अन्यच्च—महानद्युत्तरणं बुद्धिमता वर्जनीयम् । उक्तं च

महानदीप्रतरणं महापुरुषनिग्रहम् ।
महाजनविरोधं च दूरतः परिवर्जयेत् ॥ १०१॥

तथा च,

चरित्रे योषितां पूर्णसरित्तारे नृपादरे ।
सर्पमैत्र्ये वणिग्वाक्ये विश्वासं नैव कारयेत् ॥ १०२॥

भृत्यः—'अये कर्णधार ! यदुक्तं त्वया तत् सत्यमेव । मम तु महत् कार्यमस्ति' कर्णधारः—'कथय किं तत् ।' भृत्यः—'यद्य-

हमद्यैव रत्नानि गृहीत्वा देवपादमूलं न गच्छेयं, तदाज्ञाभङ्गाद्राजा मम निग्रहं करिष्यति।' नाविकः—तर्हि तेषां मम पञ्च रत्नानि यदि दास्यति, त्वां नदीमिमामुत्तारयिष्यामि।' ततो भृत्यस्तस्य पञ्च रत्नानि दत्त्वा नदीमुत्तीर्य राजसमीपमागत्य सविनयं प्रणम्य पञ्च रत्नानि ददौ। तदा राजाऽब्रवीत् 'किमु रे पंचैव समानीतानि! कुत्रावशिष्टानि पञ्च!' भृत्यः—'देव! श्रूयतां विज्ञाप्यते। अहं यथादेशमितो निर्गत्य वणिजा सह रत्ननगरं प्रविश्य तेन दत्तानि दश रत्नानि गृहीत्वा ततो निर्गत्य यावदागच्छम्, तावन्मार्गे कापि वृष्टिरतिमहती समभूत्। तदा काऽपि तटिनी कूलमुल्लङ्घ्य प्रतिभयं प्रव, हति स्म। अहं तु यथादिष्टकालं स्वामिचरणौ पश्येयमिति नदीमुत्तरीतुं नाविकाय पञ्च रत्नानि दत्तवानस्मि। पञ्च रत्नानीमानि समानीतानि। यद्यादिष्टः समयोऽतिलङ्घ्येत, तदाज्ञाभङ्गो भवेत्।

आज्ञाभङ्गो नरेन्द्राणां विप्राणां मानखण्डनम्।
पृथक्छय्या च नारीणामशस्त्रो वध उच्यते"॥ १०३॥

इत्युक्त्वा, देवः प्रमाणमिति विरराम। राजा तु तद्वचनं श्रुत्वा परं संतुष्टः सम्मान्यावशिष्टान्यपि रत्नानि तस्मायदात्।

इति कथां कथयित्वा सालभञ्जिका भोजराजं प्रति"भो देव! किमेवमौदार्यं त्वयि विद्यते? यदि विद्येत, तर्ह्युपविशेत्यवदत्। तदाकर्ण्य भोजस्तूष्णीमन्तःपुरमविशत्।

इति पञ्चमोपाख्यानम्.

---

## अथ षष्ठोपाख्यानम् ॥

इतः परं विक्रमभूमिपालस्तपश्चरन्तं किल वर्णिनं सः ।
पुरेऽभिषिच्य प्रददौ धनानि भूरीति सैषा प्रतिमाऽद्य वक्ति ॥

भोजराजः पुनः शुभे मुहूर्ते सिंहासनमारोढुमाजगाम । तावदपरा सालभञ्जिका निवार्य बभाण—'भो राजन् ! यः पुनरौदार्येण विक्रममनुकरोति स एव सिंहासनमिदमधिरोढुमर्हति । भोजः—'तस्यौदार्यवृत्तान्तं कथय ।' सालभञ्जिका—'देव ! श्रूयताम्—

विक्रमादित्यो राज्यं कुर्वन्नेकदा वसन्तोत्सवे सकलान्तःपुरवधूसमेतः क्रीडार्थं शृङ्गारवनमगमत् । तत्र च,

माकन्देषु नवोदयेषु मुदिता माध्वीरसास्वादिनो
झङ्कारैकपरायणा विरहिणां मानच्छिदो बम्भराः ।
हृष्यत्पल्लवतल्लजाङ्कुरलवास्वादोन्मिषत्पञ्चमा
भूपालं रतिविभ्रमाकुलरतं भूयो वितेनुः पिकाः ॥ १०५॥

मन्देन चन्दनमहीधरमारुतेन
व्यानर्तिता नवलताः कुसुमावतंसाः ।
जह्रुर्दृशौ च हृदयं च नरेश्वरस्य
घ्राणं च भृङ्गनिनदैर्मधुरैः श्रवश्च ॥ १०६॥

एवं नानाविधतरुलतोपशोभिते तस्मिन् प्रमदवने समुद्दीपितरतिकौतुको राजा कदाचिद्वापीषु, कदाचित् कुसुमास्तीर्णेषु लतागृहेषु, कदाचित् तरुतलेषु, कदाचिच्चन्द्रकान्तमणिमयेषु सौधेषु सहैवान्तःपुरवनिताभिर्विहरन् महान्तं कालमनैषीत् ।

तत्र कश्चिद्ब्रह्मचारी कुत्रापि तरुमूले तपश्चरन् राजानं तत्राऽगतं दृष्ट्वा स्वमनस्यचिन्तयत्—"अहो तपः कुर्वता मया जन्म वृथैव नीतम्। स्वप्नेऽपि किञ्चित् सुखं नानुभूतम्। यावज्जीवं कष्टेन कालं नीत्वा मृतस्तपःफलं भोक्तेति कोऽयं विचारः? 'विषयसुखं सर्वमेव दुःखानुविद्धम्, तदव्ययसुखोदर्कमेव तपः समाचरेदि'ति मूर्खाणां प्रलपितम्। उक्तञ्च—

त्याज्यं सुखं विषयसङ्गमजन्म पुंसा<br>
दुःखोपसृष्टमिति मूर्खविचारणैषा।<br>
व्रीहीनपास्य च सितोत्तमतण्डुलाढ्यान्<br>
कः काङ्क्षते तुषकणान् मतिमान् धरित्र्याम्॥ १०७॥

तन्महत् कष्टं कृत्वाऽपि संसारसारभूतं स्त्रीसुखमेव भोक्तव्यम्। उक्तं च—

असारभूते संसारे सारः सारङ्गलोचना।<br>
तदर्थं धनमिच्छन्ति, तत्त्यागे तु धनेन किम्॥ १०८॥

तथा च,

असारभूते संसारे सारभूता नितम्बिनी।<br>
इति संचिन्त्य वै शम्भुरर्धाङ्गे कामिनीं दधौ॥" १०९॥

इत्यादि चिन्तयित्वा, 'विक्रमश्चायं दैवादत्र समायातः। तमेनं याचित्वा संसारसुखमनुभविष्या' मीति निश्चित्य राजसमीपमागत्य 'महाराज! चिरं जीवे' त्याशिषं प्रायुङ्क्त। राजा तमासने समुपवेश्याऽपृच्छत् 'भो ब्रह्मन्! कुतः समागतोऽसि?' ब्रह्मचारी—"अहमत्रैव

जगदम्बिकापरिचर्यां कुर्वन् तिष्ठामि । नित्यमेवं परिचरतो मे पञ्चाशद्वर्षाणि व्यतीतानि । अहं तु ब्रह्मचारी । अद्य निशायां याममात्रावशिष्टायां देवता मां स्वप्ने समेत्य 'वत्स! तवाहं प्रसन्नाऽस्मि। त्वमिदानीं गृहस्थाश्रमं स्वीकृत्य पुत्रमुत्पाद्य पश्चान्मोक्षे मनो निधेहि। अन्यथा तव गतिर्नास्ति । उक्तं च—

ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् ।
अनपाकृत्य मोक्षं तु सेवमानः पतत्यधः ॥ ११०॥

दानशौण्डो विक्रमादित्यमहाराजस्तूर्णमेवात्राऽगमिष्यति । स तु तव मनोरथं पूरयिष्यतीत्येवमादिश्यान्तरधात् । तदहं प्रबुध्य भवन्तमागतं च दृष्ट्वा समागतोऽस्मि" इत्येवमनृतमवादीत् । तच्छ्रुत्वा राजा स्वमनस्यचिन्तयत् "किमेतत् सत्यं स्यात्? एवमेतत् । देवता स्वप्ने नाकथयत् । असावेव लोभादनृतं वदति । आस्तामेतत् । तथाऽप्ययमार्त इव दृश्यते । सर्वथाऽस्य मनोरथं पूरयिष्यामि । उक्तं च ।

दत्त्वाऽऽर्ताय नृपो दानं शून्यलिङ्गं प्रपूज्य च ।
परिपाल्याश्रितान् नित्यमश्वमेधफलं भजेत् ॥ १११॥

इत्यादि विचार्य तत्र नगरमेकं निर्माय तत्र तं संस्थाप्य शतं विलासिनीः पञ्चशतं तुरङ्गान् चत्वारिंशतं रथान् चतुस्सहस्रं भटांश्च तस्मै ब्राह्मणाय ददौ । किं च राजा चण्डिकानगरमिति तस्य नगरस्य नाम चकार । ततः परिपूर्णमनोरथो ब्राह्मणः कृतोद्वाहमङ्गळस्तं राजानमाशीर्भिरभिववर्ष । राजाऽपि निजनगरं जगाम ।

इति कथां सालभञ्जिका भोजाय कथयामास । भोजस्तु तादृशमौदार्यमात्मन्यपश्यन् तूष्णीं जगाम ।

इति षष्ठोपाख्यानम्.

## अथ सप्तमोपाख्यानम् ॥

मध्येसमुद्रं क्वचिदद्रिशृङ्गे दुर्गालये प्रेतकबन्धयुग्मं ।
चक्रे सजीवं पृथुसाहसेन राजेति सेयं प्रतिमा ब्रवीति॥ ११२॥

पुनरपि भोजः कदाचिच्छुभमुहूर्ते समुचितसन्नाहः सिंहासनमारोढुमुपचक्रमे । तदाऽन्या सालभञ्जिकाऽवदत्—'भो राजन्! तथाविधं साहसमौदार्यं धैर्यं च यस्यास्ति, स एवेदं सिंहासनमधिरोढुमर्हति ।' राजा—'सालभञ्जिके! कीदृशं तत्? सालभञ्जिका—

भो राजन्! शृणु । विक्रमादित्ये राज्यं कुर्वति, लोके दुर्जनः कण्टको नास्ति । सर्वे जनाः सदाचारसंपन्नाः । ब्राह्मणा वेदशास्त्राभ्यासादिस्वधर्मचर्यापराः, षट्कर्मनिरताश्च बभूवुः । सर्वस्यापि वर्णस्य पापाद्भयं, प्राणिषु दया, परमेश्वरे भक्तिः, देहे निर्ममता, नित्यानित्यवस्तुविचारः, परत्र विषये बुद्धिः, वाचि सदुक्तिः, परिपालने दार्ढ्यं, हृदये चौदार्यमभूत् । एवं सर्वोऽपि लोकः पवित्रभूतान्तःकरणो राज्ञः प्रसादात् सुखेनावर्तत । तस्यां चोज्जयिन्यां धनदो नाम कश्चिद्गुरुजः समभूत् । तस्य संपदां मर्यादा नास्ति । यानि वस्तूनि भुवने सुदुर्लभानि तानि तत्र सुलभानि । एवं सकलसंपत्समाश्रितस्य

तस्यैकदा चेतसि सर्ववस्तुष्वनित्यताबुद्धिरुदभूत्—हन्त! निस्सारोऽयं संसारः। सर्वं च वस्तुजातमनित्यम्।

उक्तञ्च—

गगननगरकल्पः संगमो वल्लभानां
जलदपटलतुल्यं यौवनं वा धनं वा।
स्वजनसुतशरीरादीनि विद्युच्चलानि
क्षणिकमिति समस्तं विद्धि संसारवृत्तम्॥ ११३॥

तथाच,

शरणमशरणं वा बन्धमूलं नराणां
क्षणपरिचितदारा द्वारमापद्गणानाम्।
विपरिमृशत पुत्राः शात्रवं सर्वमेतत्
त्यजत भजत धर्मं निर्मलं पुण्यकामाः॥ ११४॥

अतः संसारिणां धर्म एव शरणम्। उक्तञ्च—

धर्मो रक्षति रक्षितो ननु हतो हन्तीह स प्राणिनो
हन्तव्यो न तु यः स एव शरणं संसारिणां सर्वदा।
धर्मः प्रापयतीह तत्पदमपि ध्यायन्ति यद्योगिनो
नो धर्मात् सुहृदस्ति नैव च सुखी नो पण्डितो धार्मिकात्॥

धर्मः शर्म भुजङ्गपुङ्गवपुरीसारं विधातुं क्षमो
धर्मः प्रापितमर्त्यलोकविपुलप्रीतिस्तदाशंसिनाम्।
धर्मः स्वर्नगरीनिरन्तरसुधास्वादोदयस्याऽऽस्पदं
धर्मः किं न करोति मुक्तिवनितासंभोगभाग्यान्तरम्॥ ११६॥

अपि च धर्मसंग्रहार्थमुपार्जितं द्रव्यं सत्पात्रे दातव्यम्। तस्मिन् समर्पितं तद्बहुगुणं भवेत्। तथा हि

पात्रविशेषे न्यस्तं सौगुण्यं भजति वित्तमाधातुः।
जलमिव समुद्रशुक्तौ मुक्ताफलतां पयोदवृन्दस्य॥ ११७॥

न्यग्रोधस्य यथा बीजं स्तोकं सुक्षेत्रभूमिगम्।
बहुविस्तीर्णतां याति तद्वद्दानं सुपात्रगम्॥ ११८॥

इत्यादि बहुधा विचार्य श्रोत्रियानाहूय, तत्सकाशाद्दानकाण्डोक्तानि विविधानि दानानि श्रुत्वा सर्वमेव निजधनं सत्पात्रेभ्यो दत्त्वा पवित्रान्तःकरणः पुनरपि विचारयति स्म—'अहो मयैतदनुष्ठितं दानव्रतादिकं तदा सफलं भवेत्, यदा द्वारवतीं गत्वा श्रीकृष्णं द्रक्ष्यामि।' इति विचार्य द्वारवतीं प्रति निर्गत्य समुद्रतीरं गत्वा कञ्चन नाविकमाहूय समुचितमातरं निर्णीय भिक्षुकयोगिनो वैदेशिकान् नावमारोप्य स्वयं चारुह्य तैः सह धर्ममेदुरास्तास्ताः कथाः कथयन् स यावदगच्छत्, तावत् समुद्रमध्ये कश्चित् समुदीर्णः पर्वतस्तेन दृष्टः। तत्र महानेको देवालयोऽदृश्यत। धनदस्तु देवालयं गत्वा भुवनेश्वरीं गन्धपुष्पाक्षतादिभिरुपचारैरभ्यर्च्य नमस्कृत्य तस्या वामभागे छिन्नमस्तकं स्त्रीपुरुषयुगलं दृष्ट्वा पुरस्थितभित्तिभागे लिखितान्यक्षराणि पपाठ—'यदा कोऽपि परोपकारी परमैश्वर्यसंपन्नो द्वात्रिंशल्लक्षणोपेतः स्वकण्ठरुधिरेण भुवनेश्वरीमर्चयिष्यति, तदेदं स्त्रीपुरुषयुगलं सजीवं भविष्यती' ति। एवं पठित्वा सविस्मयो धनदः पुनरपि नावमारुह्य द्वारवतीं गत्वा श्रीकृष्णं दृष्ट्वा प्रणम्यास्तावीत्।

एकोऽपि कृष्णस्य कृतः प्रणामो दशाश्वमेधावभृथेन तुल्यः ।
दशाश्वमेधी पुनरेति जन्म कृष्णप्रणामो न पुनर्भवाय ॥

इत्येवं स्तुत्वा श्रीकृष्णं षोडशभिरुपचारैः संपूज्य यद्यदपूर्वं वस्तु समानीतं तत् सर्वं समर्प्य तत्र दिनत्रयमुषित्वा ततो निर्गत्य कतिपयैर्दिनैर्निजनगरमाजगाम । आगत्य च सर्वानपि बान्धवान् कृष्णप्रसादेन संभाव्य,

रिक्तपाणिर्न पश्येत्तु राजानं दैवतं गुरुम् ।
नैमित्तिकं विशेषेण सुहृदं फलकामुकः ॥ १२०॥

तथाच ।

इष्टां भार्यां प्रियं मित्रं पुत्रं चापि कनीयसम् ।
रिक्तपाणिर्न पश्येत्तु तथा नैमित्तिकं प्रभुम् ॥ १२१॥

इति विचिन्त्य प्रभाते किमप्यपूर्वं प्राभृतं गृहीत्वा विक्रमार्कं द्रष्टुं जगाम । गत्वा च सविनयं, कृष्णप्रसादं दत्त्वा तदादिष्टे चासने समाससाद । ततो राजा यात्राक्षेमं पृष्ट्वा, किं किमपूर्वं दृष्टमिति वणिजमपृच्छत् । सोऽपि समुद्रमध्योदीर्णभुवनेश्वर्यालयदृष्टकबन्ध-वृत्तान्तमवदत् । तच्छ्रुत्वा समुपजातकुतूहलो राजा तेन सार्धं प्राप तदपूर्वं स्थानम् । तत्र च देवतावामभागे पतितं कबन्धयुगलमपश्यत् । अपठीच्च तान्यक्षराणि । तदनन्तरं राजा भुवनेश्वरीं स्तुत्वा खड्गं कोशादाकृष्य यावत् कण्ठे चकार, तावत् कबन्धयुगलं सशिरःसजीवं च समभूत् । देवताऽपि राज्ञो हस्तस्थितं खड्गमाकृष्याब्रवीत् 'भो राजन्! प्रसन्नाऽस्मि । वरं वृणीष्व । राजाऽब्रवीत् 'भो देवि! प्रसन्नाऽसि

यदि, तर्ह्यस्य मिथुनस्य राज्यं देहि' ततो देवी तथेति तस्य मिथुनस्य राज्यमदात्। राजाऽपि धनदेन सह निजपुरमाजगाम।

इति कथां कथयित्वा सालभञ्जिका राजानमब्रवीत् 'एवंविधं साहसादिकं त्वयि न दृश्यते।' तच्छ्रुत्वा राजा ततो विरराम।

इति सप्तमोपाख्यानम्

---

## ॥ अथ अष्टमोपाख्यानम् ॥

काश्मीरदेशे विपुलं तटाकं वणिक्कृतं पूरयितुं जलेन।
बलिं प्रदातुं निजकण्ठरक्तैरियेष राजेति निगद्यतेऽद्य॥ १२२

भूयोऽपि भोजराजे यथापूर्वमागच्छति, पाञ्चालिकाऽन्या निषिध्य जगाद—'भोजराज! इदं पुनरनन्यसाधारणमासनम्; यदि भवान् विक्रमाविश्रुतेन साहसादिना भूष्यते, तदा त्वाम नुजानामि।' राजा किञ्चिदवनतमुखः प्राह 'सालभञ्जिके! कथय तस्यौदार्यादि-वृत्तान्तम्'। साऽब्रवीत्—

भो राजन्! शृणु। विक्रमो राजा भूमण्डले प्रवृत्ता बहुविधाः कथाश्चारमुखेन निरवशेषं जानन् वसुमतीं पर्यपालयत्। उक्तं च—

गावो गन्धेन पश्यन्ति वेदेनैव द्विजातयः।
चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः॥ १२३॥

किंच, यो राजा भवति, तेन सर्वोऽपि लोकस्थितिर्ज्ञातव्या। अपिच, अर्थिनः पूजनीयाः। प्रजाः सम्यक् परिपालनीयाः। दुष्टाश्च दण्डनीयाः। न्यायेन धनोपार्जनं कर्तव्यम्। अर्थिषु पक्षपातो विधेयः। एतान्येव राज्ञः पञ्चयज्ञकर्माणि। तथाहि—

दुष्टस्य दण्डः सुजनस्य पूजा न्यायेन कोशस्य च संप्रवृद्धिः ।
सुपक्षपातोऽर्थिषु राज्यरक्षा पञ्चैव यज्ञाः कथिता नृपाणाम् ॥

किंच ।

किं देवकार्येण नराधिपस्य कृत्वा निरोधं विषयस्थितानाम् ।
तदेव कार्यं जपयज्ञहोमा येन द्विजानां न पतन्ति राष्ट्रे ॥

एवं विक्रमे राज्यं कुर्वति सत्येकदा चारा भूमण्डलं परिभ्रम्य राज्ञः सकाशमागत्य राज्ञा पृष्टा व्यजिज्ञपन्—

देव, काश्मीरदेशे महाद्रव्यसंपन्नः कश्चिद्वणिगस्ति । स च धर्मनिरतेन चेतसा पञ्चक्रोशविस्तारं तटाकमेकमचीखनत् । तन्मध्ये किञ्चिद्बिलमदृश्यत । तत्र च देवो नारायणः शयानः समदृश्यत । स तस्य चायतनं कारयामास । परमुदकं न लेभे । भूयोऽपि जलोद्गमनिमित्तं वरुणमुद्दिश्य ब्राह्मणैर्जपमकारयत् । तदपि मुधा बभूव । तत एकदा खिन्नमानसे वणिजि तटाकतीरे समुपविश्य 'अहो ! केनाप्युपायेनोदकं न लभ्यते । वृथाश्रमो जातः इति चिन्तयति, अधिगगनममानुषी काऽपि सरस्वती समजायत—'भो वणिक्पुत्र ! किमर्थं निश्वसिषि; महाराजलक्षणयुक्तस्य पुरुषस्य कण्ठरक्तेन यदा तटाकं सिच्यते, तदा विमलोदकमाविर्भविष्यति, नान्यथे'ति । स तदाकर्ण्य तटाकतीरे महदन्नसत्रमकल्पयत् । तत्र च भोक्तुं स्वदेशवासिनो विदेशवासिनश्च जनाः समाययुः । तदानीं तत्र स्थिताः वणिगादेशकारिणो भृत्याः विदेशवासिनां पुरत एवमवदन्—'यः कोऽपि स्वकण्ठरुधिरेण तटाकं सिञ्चति तस्य शतभारसुवर्णं दीयत' इति । तद्वचः

सर्वेऽप्यशृण्वन् । कोऽपि तत्साहसं तु नाङ्गीकृतवान् । एवंविधं महच्चित्रं दृष्टमस्माभिः । ”

इत्येवं चाराणां वचनं श्रुत्वा विक्रमार्कः स्वयं तत्र गत्वा बिलशयनं देवं प्रणम्यातिमनोज्ञमतिविशालं तटाकं दृष्ट्वा विस्मितो मनस्येवमकरोत्—

यदि मम कण्ठरक्तेन तटाकं सिञ्चामि, तदेदं जलैः संपूर्णं भवेत् । अनेन च सकललोकानामुपकारो भवेत् । इदं मम शरीरं वर्षशतमपि स्थित्वा सर्वथा विनाशमेव यास्यति । अतः शरीरममत्वं न कार्यम् । परोपकाराय शरीरमपि दातव्यम् । उक्तं च—

शतमपि शरदां वै जीवितं धारयित्वा
शयनमधिशयानः सर्वथा नाशमेति ।
सुलभविपदि देहे सूरिलोकैकनिन्द्ये
न विदधति ममत्वं मुक्तिकान्तोत्सुकास्ते ॥ १२६॥

किं च ।

सर्वदैव रुजाक्रान्तं सर्वदैव शुचो गृहम् ।
सर्वदा विपदं प्राप्तं मर्त्यानां देहपञ्जरम् ॥ १२७॥

तैरेव फलमाक्रान्तमनन्तं पुण्यकर्मणाम् ।
येषां तु जन्म न स्वार्थे यैः शरीरं परार्थितम् ॥ १२८॥

एवं विचार्य पुरस्थितप्रासादगर्भगतजलशयनस्य विष्णोः पूजां विधाय नमस्कृत्य बभाण—‘भो देव ! जलशायिन् ! द्वात्रिंशल्लक्षणसंपन्नस्य पुरुषस्य कण्ठरक्तं वाञ्छसि । तर्हि ममास्य कण्ठरक्तस्य

तृप्तो भूत्वा तटाकमेनं जलैः परिपूरय । ' इति संप्रार्थ्य यावत् कण्ठे खड्गमकरोत्, तावदेव भगवान् खड्गं धृत्वा जगाद—'वीर ! तवाहं प्रसन्नोऽस्मि । अलमनेन साहसेन । विरम । वरं वृणीष्व ।' राजाऽवदत् 'देव ! यदि मम प्रसन्नो जातोऽसि, तर्हीमं तटाकं जलैः परिपूरय ।' देवः—'राजन् ! त्वमस्मात् स्थानान्निर्गत्य यावत् पश्चात् पश्यसि, तावज्जलैः परिपूर्णस्तटाको भविष्यति ।' राजा तच्छ्रुत्वा यावत् ससंभ्रमं तटाकतीरमारुरोह, तावत् सरोऽपि जलैः परिपूर्णमदृश्यत । राजा विक्रमार्कोऽपि तेन वणिजा स्तूयमानस्तेन समर्पितं शतभार-सुवर्णं कस्मैचिद्विवाहार्थिने दरिद्राय ब्राह्मणाय दत्वा स्वनगरमगमत् ।

इति कथां कथयित्वा सालभञ्जिका राजानमब्रवीत् 'भो राजन् त्वय्येवमौदार्यपरोपकारसाहसप्रभृतयो गुणा विद्यन्ते चेत्, तर्ह्यस्मिन् सिंहासने समुपविश । ' तदाकर्ण्य राजा तूष्णीं बभूव ।

इत्यष्टमोपाख्यानम् ।

---

## अथ नवमोपाख्यानम् ॥

निवार्य काञ्चीनगरे लताङ्गीं निशाचरोपद्रवतः कदाचित् ।
चरित्रमाख्यातवते तदीयं ददौ स तामित्यधुनाऽभिधत्ते ॥

भूयोऽपि भोजमहीपाले सकौतुकसंभ्रममागच्छति, अन्या सालभञ्जिका सहासमिदमभाषत—'देव! सिंहासनमारोढुं संभ्रमसि। दुर्लभं ते विक्रमार्कगतं साहसौदार्यादिकम् । तद्विरमास्मान्मुधासमुद्य-मात् । ' राजा—'अयि ! कथय गुणानन्यदुरवापान् विक्रमार्कस्य ।'

सालभञ्जिका—विक्रमार्के राज्यं कुर्वति, भट्टिर्मन्त्री । उपमन्त्री गोविन्दः, चन्द्रः सेनापतिः तस्य पुत्रः कमलाकरो नाम । स पितुः प्रसादादनुदिनमाकण्ठं भुञ्जानो वस्त्रभूषणताम्बूलादिना शरीरं संस्कृत्य विषयसुखमनुभवन् सुचिरमतिष्ठत् । एकदा दुर्वृत्तं सुतमाहूय चन्द्रोऽवदत् ।

रे कमलाकर ! ब्राह्मणजन्म प्राप्यापि त्वं कथमेवं तिष्ठसि ? स्वेच्छावृत्त्याऽयमात्मा नानायोनिषु जन्म प्राप्नोति । कदाचित् सुकृतवशान्मनुष्ययोनिं प्रविशति । तत्रापि ब्राह्मणकुले जन्म महता पुण्येन लभ्यते । तल्लब्ध्वाऽपि त्वं दुर्वृत्तो जातोऽसि । सर्वदा बहिरेव संचरसि । भोजनकाले परं भवनमागच्छसि । अनुचितमेवं करोषि । अन्यच्च, तवायं विद्याभ्यासकालः । अस्मिन् काले विद्यां यदि नाभ्यस्यसि, तदुत्तरत्र तव महान् संतापो भविष्यति ।

उक्तञ्च ।

ये बालभावे न पठन्ति विद्यां कामातुरा यौवननष्टचित्ताः ।
ते वृद्धभावे परिभूयमाना वहन्ति गात्रं शिशिरे यथाऽब्जम् ॥

तथा च ।

येषां न विद्या न तपो न दानं न चापि शीलं न गुणा न धर्मः ।
ते मर्त्यलोके भुवि भारभूता मनुष्यरूपाः पशवश्चरन्ति ॥१३१॥

अत्र हि पुरुषस्य न विद्यायाः परं भूषणं धनं वाऽस्ति ।

तथा च ।

विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनं
विद्या भोगकरी यशस्सुखकरी विद्या गुरूणां गुरुः ।

विद्या बन्धुजनो विदेशगमने विद्या परा देवता
विद्या राजसु पूजिता न हि धनं विद्याविहीनः पशुः ॥ १३२

तथा च ।

किं कुलेन विशालेन विद्याहीनस्य देहिनः ।
अकुलीनोऽपि विद्यावान् दैवतैरपि पूज्यते ॥ १३३॥

अन्यच्च, वत्स ! यावदहं जीवामि ; तावदेव त्वया विद्याऽभ्यसनीया। अन्यथा तु दुष्प्रापैव सा। अभ्यस्ता तु सा तव सकलमपि बन्धुकृत्यं करिष्यति।

उक्तश्च।

मातेव रक्षति पितेव हिते नियुङ्क्ते
कान्तेव चाभिरमयत्यपनीय खेदम् ।
कीर्तिं च दिक्षु वितनोति लक्ष्मीं
किं किं न साधयति कल्पलतेव विद्या॥— १३४॥

एवं पितृवचनं श्रुत्वा पश्चात्तापपरिभूतः कमलाकरो 'यदाऽहं सर्वज्ञो भविष्यामि, तदा पितृमुखं द्रक्ष्यामी' ति प्रतिज्ञाय स्वयं काश्मीरदेशं गत्वा तत्र चन्द्रमौळिभट्टनामानमुपाध्यायमुपसृत्य सविनयं प्रणम्य 'भोः स्वामिन्! मूर्खोऽहं भवत्सकाशाद्विद्याभ्यासं कर्तुमागतोऽस्मि । परं प्रसीद । यथाऽहममितज्ञो भवेयं तथा विधातुमर्हति स्वामी । ' इति पुनः पुनः प्राणंसीत् । उपाध्यायश्चैनमङ्गीचकार । कमलाकरश्च गुरुं शुश्रूषमाणः पपाठ । उक्तं च—

गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा ।
अथवा विद्यया विद्या चतुर्थेनोपलभ्यते ॥ १३५॥

एवमप्रमादं शुश्रूषमाणस्य तस्य कालो महानतिचक्राम । अनन्तरमेकदा तूपाध्यायस्तस्य कृपातरङ्गितान्तरङ्गः सिद्धसारस्वतमन्त्रमुपदिदेश । तेन चोपदेशेन सर्वज्ञो भूत्वा कमलाकरः कृतार्थमात्मानं मत्वा सप्रदक्षिणप्रणाममुपाध्यायस्यानुज्ञां गृहीत्वा पितृदर्शनलालसः स्वनगरं प्रत्यागच्छन् मार्गवशात् काञ्चीनगरमगमत् ।

तत्र चानन्यसाधारणरूपसंपन्ना नरमोहिनी नाम काचिद्वनिताऽऽस्त । यस्तां पश्येत्, स कामज्वरपीडितः परमुन्मादावस्थां प्राप्नुयात् । यः पुनरनया विहृत्य तस्मिन्नेव तल्पे निद्रामनुभवेत्, तस्य रुधिरं विन्ध्याचलनिवासी कश्चिद्राक्षसो निरवशेषं पीत्वा तं मारयेत् । कमलाकरोऽप्येतत् कौतुकं तत्र दृष्ट्वा निजनगरमाजगाम । आगते च कुमारे जनकः परं ननन्द ।

परेद्युरेष कमलाकरः पित्रा सह राजानं द्रष्टुं गत्वा,

'पाण्डुपङ्कजसंलीना मधुपाळीर्मनोहराः ।
यो बिभर्ति विधेरात्मा स तनोतु शुभं तव ॥' १३६॥

इति विक्रमार्कायाशिषमवदत् । आस्थाय च समुचितमासनमात्मनः कलावैदग्ध्यमदर्शयत् । राजा तु तं वस्त्राभरणादिना संभाव्य पप्रच्छ । 'भोः कमलाकर! कुत्र व्यचरः? किमद्भुतमद्राक्षीः?' कमलाकरः—'अहं तु बहून् देशान् व्यचरम् । पुनरागच्छन् काञ्चीनगरेऽद्भुतमेकमपश्यम् ।' 'राजा—'तत् किं कथय।' कमलाकरस्तदद्भुतमाचचक्षे । राजा—'कमलाकर! तर्ह्यागच्छ, तत्र गच्छावः ।' ततस्तेन सह राजा काञ्चीनगरमागत्य नरमोहिन्या निरतिशयं

रूपं दृष्ट्वा विस्मयं प्राप्य तस्या गृहं प्रविवेश । साऽपि तौ राजार्हेणोपचारेण मुदितहृदयौ कृत्वा सविनयमेवं व्यजिज्ञपत् । 'देव ! धन्याऽस्मि । पवित्रमभूदिदं भवनं । यतो भवच्चरणकमलधूळीभूषितमजायत । अद्य भोजनपरिग्रहेण जनमिमं कृतार्थयतु देवः ।' राजा—'इदानीमेवाहं भुक्त्वा समागतोऽस्मि; श्रुतिसुखेन भाषितमधुनैव तुष्टोऽस्मि।' ततस्तया दत्तां वीटिकां जग्राह । इत्थं रात्रौ प्रहरोऽतीयाय । नरमोहिनी तु सुष्वाप । द्वितीये प्रहरे राक्षसः समागत्य नरमोहिनीं मञ्चे सुप्तामेकाकिनीं दृष्ट्वा निर्जगाम । राजा तु राक्षसं केशे गृहीत्वा कृपाणेन कण्ठमच्छिनत् । तत्कोलाहलं श्रुत्वा नरमोहिनी प्रबुध्य हतं राक्षसं विलोक्य संतुष्टा राजानमस्तावीत्—'देव ! तव प्रसादादहं निर्भया जाताऽस्मि । अद्यप्रभृति मम राक्षसोपद्रवो निवृत्तः । भवत्कृतादुपकारात् कथमहमुत्तीर्णा भवेयम्? अतस्त्वामनुसरामि । यदाज्ञापयति देवस्तदाचरितुमियमायत्ताऽस्ति।' राजा—'यदि मयोक्तं करिष्यसि, तर्ह्यमुं कमलाकरं भजस्व ।' ततः सा नरमोहिनी कमलाकरमभजत् । विक्रमोऽप्युज्जयिनीमगमत् ।

इमां कथां कथयित्वा सालभञ्जिका राजानं भोजमवदत्—'भो राजन् ! त्वय्येवमौदार्यं धैर्यं परोपकारश्च विद्यन्ते चेत्, तर्ह्यस्मिन् सिंहासन उपविश ।' तच्छ्रुत्वा राजा तूष्णीमतिष्ठत् ।

इति नवमोपाख्यानम् ।

## ॥ अथ दशमोपाख्यानम् ॥

कदाऽपि केनापि मुनीश्वरेण भूतेरभावाय फलं प्रदत्तं ।
कुष्ठाभिभूताय ददौ द्विजाय स विक्रमो भूप इतीह वक्ति ॥

पुनरपि राजा भोजो यावत् सिंहासनमारुरुक्षत्, तावदन्या पाञ्चालिका प्राह—'राजन्! विक्रमस्यौदार्यादिगुणा यस्य विद्यन्ते, स इदं सिंहासनमारोढुमलम्।' भोजः—सालभञ्जिके! कथय तस्यौदार्यादिवृत्तान्तम्।' साऽब्रवीत्'—भो! राजन्, श्रूयताम्।

विक्रमार्के सिंहासनमिदमास्थाय विश्वम्भरां पालयति, योगी कश्चिदुज्जयिनीं प्रत्यागच्छत्। स च वेदवेदाङ्गादिसकलशास्त्रविचक्षणः। किं बहुना, तत्सदृशोऽन्या नास्ति। स साक्षात् सर्वज्ञ एव। एकदा विक्रमो राजा तस्य प्रसिद्धिं निशम्य तमाह्वातुं पुरोहितं त्रिविक्रमं प्रेषयामास। स च तदन्तिकं गत्वा नमस्कृत्याब्रवीत्' भोः स्वामिन्! राजा विक्रमो भवन्तमाह्वयति। तत्रागच्छतु भवान्।' योगी—"राजदर्शनेनास्माकं किमस्ति प्रयोजनम्?

आशासीमहि भिक्षान्नमाशावासो वसीमहि।
शयीमहि महीपृष्ठे कुर्वीमहि किमीश्वरैः? ॥ १३८॥

अन्यच्च।

निःस्पृहो नाधिकारी स्यान्नाकामी मण्डनप्रियः।
नाविदग्धः प्रियं ब्रूयात् स्फुटवक्ता न वञ्चकः" ॥ १३९॥

पुरोहितस्तदाकर्ण्य राजसमीपमागत्य न्यवेदयत्। ततो राजा स्वयमेव तत्संदर्शनार्थमागत्य प्रणम्य तदाज्ञयोपविष्टस्तेन सह नाना-

विधाध्यात्मकथाः कुर्वन्नेकदा तमपृच्छत्—'भोः स्वामिन् ! तव कति वर्षाणि जातानि? योगी—'किमेवं पृच्छसि? नीतिविदा पुरुषेण स्वस्यायुर्न कथनीयमिति किं नाश्रौषीः ? अन्यच्च, यस्तु योगीश्वरः स कालं वञ्चयित्वा सुचिरं जीवति । आस्तामेतत् । यदि त्वं साधयितुं प्रभवसि, तर्हि मन्त्रमेकमुपदिशामि ।' राजा.—'किं तेन लभ्येत ?' योगी.—'तेन मन्त्रेण जरामरणवर्जितो भविष्यसि ।' राजा—'तर्ह्युपदिशतु स्वामी । कथमपि साधयामि । ' ततो योगीश्वरो राज्ञे मन्त्रमुपदिश्य, 'अमुं मन्त्रं ब्रह्मचर्येण वर्षमेकं संजप्य दूर्वाङ्कुरैर्होमं विधेहि । ततः पूर्णाहुतिसमये होमकुण्डात् कश्चित् पुरुषः फलहस्तो निर्गत्य फलं दास्यति । तदुपयुज्य जरामरणवर्जितो वज्रकायो भविष्यसि ।' इत्युक्त्वा तमामन्त्र्य यथेच्छं जगाम । राजाप्युज्जयिनीं समया हायनमेकं ब्रह्मचर्येण मन्त्रं संजप्य दूर्वादलैर्हुत्वा पूर्णाहुतिमकरोत् । तावद्धोमकुण्डात् कश्चित् पुरुषो निर्गत्य दिव्यमेकं फलं राज्ञे ददौ । राजाऽपि तत्फलं गृहीत्वा कृतकृत्यः पुरं प्रविश्य राजमार्गे समागच्छन् कुष्ठव्याधिना विकीर्णसर्वावयवं कञ्चन ब्राह्मणमद्राक्षीत् । स च राजानमुपसृत्य कृपणमवादीत्—"देव ! राजा नाम ब्राह्मणानां लोकस्य च मातापितृवदवगन्तव्यः । उक्तं च ।

राजा बन्धुरबन्धूनां राजा चक्षुरचक्षुषाम् ।
राजा पिता च माता च राजा चार्तिहरो गुरुः ॥ १४०॥

त्वं तु विश्वस्यार्तिं परिहरसि । अनेन व्याधिना मम शरीरं नश्यति । शरीरनाशादनुष्ठानं नश्यति । सर्वस्यापि धर्मकार्यस्य शरीरमेव साधनम् । उक्तं च ।

अपि ! क्रियार्थं सुलभं समित्कुशं ?
जलान्यपि स्नानविधिक्षमाणि ते? ।
अपि स्वशक्त्या तु तपः प्रवर्तते ?
शरीरमाद्यं खलु धर्मसाधनम् ॥"— १४१॥

राजा—'किं ते मनोगतम् ? किमहं करवाणि ? निश्शङ्कं कथय ।' ब्राह्मणः—'ममैतच्छरीरं यथा निरामयमनुष्ठानयोग्यं भवेत्, तथा विधातुमर्हति भवान्' । 'राजा तस्य ब्राह्मणस्य वचनं श्रुत्वा तस्मै तत्फलं ददौ । ततो ब्राह्मणः परमतुष्यत् । राजाऽपि स्वभवनं जगाम ।

इति कथां कथयित्वा सालभञ्जिका भोजराजमब्रवीत्—'भो राजन् ! त्वय्येवमौदार्यं विद्यते चेत्, तर्ह्यस्मिन् सिंहासन उपविश ।' तच्छ्रुत्वा राजा तूष्णीं बभूव ।

इति दशमोपाख्यानम् ।

---

## अथैकादशोपाख्यानम् ॥

शैवालशैलनिलयं पिशिताशनेन्द्रं
विप्रान् पलाशनगरीनिलयान् घसन्तं ।
श्रुत्वा ततः सपदि तान्विबुधानरक्ष-
द्राजेति वक्ति मधुरं प्रतिमा नृपाय ॥ १४२॥

पुनरपि राजा भोजः सिंहासने शुभमुहूर्ते यावदुपवेष्टुमाजगाम, तावदन्या पाञ्चालिका पुनरेव निवारयामास । राजाऽब्रवीत्—

'अयि सालभञ्जिके ! यदि जानीषे कथय तस्य धैर्यादिवृत्तान्तम् ।'
साऽब्रवीत्—'महीपाल ! श्रूयताम् ।

विक्रमे राज्यं कुर्वति, भूमण्डले दुर्जनः पिशुनस्तस्करः पापकर्मा वा न कोऽप्यासीत् । किं च, यस्य राज्ञः सर्वदा राज्यचिन्ता मन्त्रविचारः स्वतो बलवदरिविजयोपायविचारश्च, स केवलं चिन्तापरत्वाद्दिवारात्रं निद्रामपि न याति । उक्तं च—

अर्थातुराणां न गुरुर्न बन्धुः कामातुराणां न भयं न लज्जा ।
चिन्तातुराणां न सुखं न निद्रा क्षुधातुराणां न रुचिर्न कालः ॥

एष पुनर्विक्रमो राजा नैवमभूत् । सर्वान् प्रत्यर्थिभूभुजः स्वपादपद्माक्रान्तान् विधाय निजाज्ञापरतन्त्रं राज्यमकरोत् । उक्तं च ।

आज्ञामात्रफलं राज्यं ब्रह्मचर्यफलं तपः ।
ज्ञानमात्रफला विद्या दत्तभुक्तफलं धनम् ॥ १४४॥

एकदा राजा राज्यभारं मन्त्रिषु निधाय स्वयं योगिवेषेण देशान्तरं प्रति निर्जगाम । निर्गत्य च यत्र स्वचित्तस्य सुखमभूत् तत्र कतिचिद्दिनान्यतिष्ठत् । यत्राऽश्चर्यं तत्रापि कश्चित् कालमनयत् । एवं पर्यटतस्तस्यैकदा कुत्रापि महारण्ये सूर्योऽस्तं जगाम । राजा तु किञ्चन वृक्षमूलमाश्रित्योपविष्टः । तस्योपरि वृद्धश्चिरजीवी नाम कश्चित् पक्षिराजस्तस्थौ । तस्य पुत्राः पौत्राश्च प्रातर्देशान्तरं गत्वा स्वोदरमापूर्य सायं प्रत्येकमेकैकं फलं गृहीत्वा तस्मै चिरजीविने प्रतिदिनं दिशन्तः सुखमूषुः । साधु चेदमुच्यते ।

वृद्धौ च मातापितरौ साध्वी भार्या सुतः शिशुः ।
अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत् ॥ १४५॥

अथैकदा रात्रौ चिरजीवी सुखोपविष्टः सन् पक्षिणोऽपृच्छन् । राजाऽपि वृक्षमूलमाश्रित्य तद्वचनं शृण्वन्नास्त । चिरजीवी—'भोः पुत्राः! परितः पर्यटन्तो भवन्तः किमद्भुतमद्राक्षुः? तत्र पटुचञ्चुर्नाम कश्चित् प्राह 'अहं किमप्याश्चर्यं नाद्राक्षम् । अपि तु परेद्युर्मम महद्दुःखं भविष्यति । चिरजीवी—'भोः पुत्र, यः सुहृदे स्वदुःखं निवेदयति, स सुखी भवति । तथाहि ।

सुहृदि निरन्तरचित्ते गुणवति भृत्येऽनुवर्तिनि कलत्रे ।
स्वामिनि सौहृदचित्ते निवेद्य दुःखं सुखी भवत्येव ॥' १४६॥

तदाकर्ण्य पटुचञ्चुरात्मदुःखमकथयत् ।

तात, श्रूयताम् । अस्त्युत्तरदेशे शैवालको नाम पर्वतः । तत्समीपे पलाशनगरं नामाग्रहारोऽस्ति । तत्र च पर्वते कश्चिद्राक्षसः प्रतिदिनं नगरमार्गागतान् जनान् बलात् पर्वतं नीत्वा भक्षयन् वसति स्म । एकदा तु जनाः 'भो राक्षस, यथेच्छं सम्मुखागतं पुरुषं मा भक्षय । वयं तुभ्यमेकैकं पुरुषं प्रतिदिनमाहारार्थं दास्यामः ।' इत्यभ्ययाचन्त । सोऽप्येतदङ्गीचकार । अनन्तरं महाजनाः प्रतिदिनं गृहक्रमेणैकैकं पुरुषं तस्मै प्रायच्छन् । एवं महानतिचक्राम कालः । अद्य मम पूर्वजन्मनिमित्तभूतस्य ब्राह्मणस्य बलिवासरः सम्प्राप्तः । तस्य ह्येक एव पुत्रः । यदि तं दद्यात्, तदा सन्ततिविच्छेदो भवेत् । यद्यात्मानमेव प्रयच्छति, तदा भार्या शतवृद्धा विधवा भवति । वैधव्यं पुनर्महद्दुःखमबलानाम् । तथा च रामायणे—

पतिहीना तु या नारी कामं भवतु पुत्रिणी ।
धनधान्यैः सुपूर्णाऽपि विधवेत्युच्यते बुधैः ॥ १४७॥

तदेतद्दुःखं मयि संक्रामति ।

तस्य वचनं श्रुत्वा तत्रान्ये पतङ्गा निजगदुः—सखे सज्जनस्य दुःखेन तव दुःखं युक्तमेव । उक्तं च,

सुखिनि सुखी सुहृदि सुहृद्दुःखिनि दुःखी च सज्जनो भवति ।
उदयति मुदितः कामं शशिनि समुद्रोऽस्तमयति च क्षीणः ॥

क्षीरेणात्मगतोदकाय हि गुणा दत्ताः पुरा तेऽखिलाः
क्षीरोत्तापमवेक्ष्य तेन पयसा ह्यात्मा कृशानौ हुतः ।
गन्तुं पावकमुद्गतं तदभवद्दृष्ट्वा स्वमित्रापदं
युक्तं तेन जलेन शाम्यति सतां मैत्री पुनस्त्वीदृशी ॥ १४९॥

इति पक्षिणां सल्लापं श्रुत्वा विक्रमार्कस्तं पर्वतमयात् । तत्र च वध्यशिलां निरीक्ष्य तत्समीपस्थिते सरोवरे स्नात्वा वध्यशिलायामुपविवेश । तत्रान्तरे राक्षसोऽपि समागत्य तत्र प्रहसितवदनं राजानमासीनं दृष्ट्वा विस्मितः पप्रच्छ—'भो महासत्त्व, को भवान्? कुतः समागमत्? यः पुनरत्र शिलायामुपविशति, स मामदृष्ट्वापि भयान्म्रियेत; त्वं पुनर्महाधैर्यसम्पन्नः स्मेराननो दृश्यसे । अन्यच्च यस्य मरणकालः सन्निधत्ते स ग्लानिं भजति । त्वं पुनरधिकां कान्तिं प्राप्य हससि ।' राजा—'सखे, तव किमनेन विचारेण? मया परार्थमेव शरीरं ध्रियते । यदात्मनः समीहितं तत् कुरु ।' निशाचरस्तु राज्ञः सौजन्यमालोक्य मनस्येव-

मचिन्तयत्—"अहो ! साधुरयं । यदात्मनः सुखभोगेच्छां विहाय परदुःखमसहमानः स्वशरीरं जिहासति ।

उक्तञ्च—

त्यक्त्वात्मसुखभोगेच्छां सर्वसत्त्वसुखैषिणः ।
भवन्ति परदुःखेन साधवोऽत्यन्तदुःखिताः ॥"   १५०॥

इत्येवं विचिन्त्य राजानमब्रवीत्—"भो महापुरुष, यतः परार्थे शरीरं प्रयच्छसि, ततस्तवैव जीवितं श्लाघ्यम्—

जीवत्येव पशुश्चापि केवलं ह्युदरम्भरिः ।
तस्यैव जीवितं श्लाघ्यं यः परार्थे तु जीवति ॥   १५१॥

अथवा भवादृशां परोपकारिणामेतत् चित्रं न भवति ।

किमत्र चित्रं यत् सन्तः परानुग्रहतत्पराः ।
न हि स्वदेहशैत्यार्थं जायन्ते चन्दनद्रुमाः ॥   १५२॥

सखे, नूनमनेनोपकारेण त्वं सर्वाः सम्पदः प्राप्नुहि । यथा चाहुः—

परोपकारव्यापारपरो यः पुरुषो भुवि ।
स सम्पदः समाप्नोति परादपि च याः पराः ॥   १५३॥
परोपकारनिरता ये स्वर्गसुखनिःस्पृहाः ।
जगद्धिताय जनिताः साधवस्त्वीदृशा भुवि ॥"   १५४॥

एवमभिधाय राजानं पुनरब्रवीत् । 'वयस्य, तवाहं तुष्टोऽस्मि । वरं वृणीष्व ।' राजा—"यदि प्रसन्नो जातोऽसि, तदद्य प्रभृति

मनुष्यभक्षणं परित्यज । अत्रत्यान् विप्रान् मृत्युभयात् परित्रायस्व। आत्मानमिव तान् पश्य । तथाहुः प्राज्ञाः—

मरिष्यामीति यद्दुःखं पुरुषस्योपजायते ।
शक्यस्तेनानुमानेन परोऽपि परिरक्षितुम् ॥ १५५॥

अन्यच्च—

यथा च ते जीवितमात्मनः प्रियं
तथा परेषामपि जीवितं प्रियं ।
संरक्ष्यते जीवितमात्मनो यथा
तथा परेषामपि रक्ष जीवितम् ॥ " १५६॥

इति राज्ञा निरूपितः सोऽपि राक्षसस्तदा प्रभृति प्राणिवधं परितत्याज । राजा विक्रमोऽपि कृतार्थो भूसुरान् प्रणम्य तैरभिनन्दितः स्वनगरमगमत् ।

इतीमां कथां सालभञ्जिकाकथितामाकर्ण्य भोजस्त्रपावनतवदनो निजान्तः पुरमयासीत् ।

इत्येकादशोपाख्यानम् .

---

## ॥ द्वादशोपाख्यानम् ॥

कुत्रापि वेणुविपिने रजनीचरेण
केनापि रात्रिषु परं व्यथितां रसन्तीम् ।
तन्वीं ररक्ष विनिहत्य तमेष राजे-
त्येनां कथां कथयति प्रतिमाद्य रम्याम् ॥ १५७॥

भूयोऽप्येकदा भोजे भूमिपाले सिंहासनमारोढुमायात्यपरा सालभञ्जिका जगाद 'एतत्सिंहासनं विक्रमार्कस्य। तस्यौदार्यं प्रथममाकर्ण्यानन्तरमुपाविश।' भोजः—'कथय तस्यौदार्यम्।' साब्रवीत्, श्रूयताम्।

विक्रमार्के राज्यं कुर्वति, तस्य नगरे भद्रसेनो नाम वणिगासीत्। तस्य पुरन्दरो नाम पुत्रोऽभूत्। तस्य भद्रसेनस्य सम्पदांपरिच्छेदो नादृश्यत। स तु परं व्ययशीलो नासीत्। ततश्चिराद्भद्रसेने मृते पुरन्दरः पितुः सर्वस्वं प्राप्य कालोचितं त्यागं कर्तुमुपाक्रमत। अथैवंविधमेनं धनदो नाम सुहृदभाषत—"सखे पुरन्दर वणिक्पुत्रो भूत्वापि महाक्षत्रियकुमार इव व्ययं करोषि। एतद्वणिक्कुलसंभवस्य नोचितम्। वणिक्पुत्रेण काकिण्यापि द्रव्यसंग्रहः कर्तव्यः। परं वराटिकाया अपि व्ययो न कर्तव्यः। उपार्जितं द्रव्यं कस्याञ्चिदापदि पुरुषस्योपकुर्यात्।

आपदर्थं धनं रक्षेद्दारान् रक्षेद्धनैरपि।
आत्मानं सततं रक्षेद्दारैरपि धनैरपि॥"   १५८॥

इत्येतद्धनदवचनं श्रुत्वा पुरन्दरः प्राह—सखे धनद, समुपार्जितं सद्वित्तं कस्याञ्चिदापद्युपयोगाय भवतीति यो वदति स विचारशून्यः। यदा त्वापदः समायास्यन्ति, तदोपार्जितं धनमपि नश्यति। अतो विवेकिना पुरुषेण गतेऽर्थे शोको न कार्यः। नाप्यागामिनोऽर्थस्य चिन्ता। परं वर्तमानमेव विचारणीयम्। तथा चोक्तम्।

गते शोको न कर्तव्यो भविष्यन्नैव चिन्तयेत् ।
वर्तमानेषु कार्येषु वर्तन्ते हि विचक्षणाः ॥ १५९॥

तथा यद्भवितव्यं तदनायासेन भविष्यति । यद्गन्तव्यं तदपि गमिष्यति ।

भवितव्यं भवत्येव नारिकेळफलाम्बुवत् ।
गन्तव्यं गच्छति सदा गजभुक्तकपित्थवत् ॥ १६०॥

तथा च ।

न हि भवति यन्न भाव्यं भवति हि भाव्यं विनापि यत्नेन ।
करतलगतमपि नश्यति यस्य हि भवितव्यता नास्ति ॥"

एतेन पुरन्दरवचनेन निरुत्तरीभूतो धनदस्तूष्णीमासीत् । ततः पुरन्दरः पितृद्रव्यं सर्वं व्ययमनयत् । तदा निरर्थकं पुरन्दरं बन्धुमित्रादयो न मानयन्ति स्म । तेन सह गोष्ठीमपि नाकुर्वत । तदा पुरन्दरः स्वमनस्यचिन्तयत्—"यावद्धस्ते धनमासीत्, तावदेव सर्वे मित्रादयो मामसेवन्त ; इदानीं मया सह गोष्ठीं न कुर्वन्ति। नीतिरियं सत्या, यस्यार्थास्तस्य मित्राणीति ।

यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः ।
यस्यार्थाः स पुमान् लोके यस्यार्थाः स च पण्डितः ॥ १६२॥

पुंसि क्षीणधने न बान्धवजनः पूर्वं यथा वर्तते
स्थित्या केवलया स्थितः परिजनः स्वच्छन्दतां गच्छति ।
लोलत्वं सुहृदश्च यान्ति बहुशः किं वापरैर्भाषणै-
र्भार्याया अपि भूतले स्फुटमहो ! नैवादरस्तादृशः ॥ १६३॥

तथा च ।

यस्यास्ति वित्तं स नरः कुलीनः
स पण्डितः स श्रुतवान् विधिज्ञः ।
स एव वक्ता स च दर्शनीयः
सर्वे गुणाः काञ्चनमाश्रयन्ति ॥ १६४॥

अन्यच्च ।

अपनयतोऽपि हि धनिनो बन्धुसहस्रं भवेत् पदस्थस्य ।
भ्रष्टधनस्य हि सततं बन्धुरपि मुखं न दर्शयत्येव ॥ १६५॥

तथाच ।

वनानि दहतो वह्नेः सखा भवति मारुतः ।
स एव दीपनाशाय कृशे कस्यास्ति सौहृदम् ॥ १६६॥

तथाच ।

दारिद्र्याय नमस्तुभ्यं सिद्धोऽहं त्वत्प्रसादतः ।
सर्वं पश्यामि देवेश न मां पश्यति कश्चन ॥ १६७॥

अन्यच्च ।

मृतो दरिद्रः पुरुषो मृतो यागस्त्वदक्षिणः ।
मृतमश्रोत्रिये दानं मृतं मैथुनमप्रजम् ॥" १६८॥

इत्येवं विचार्य पुरन्दरो देशान् परिभ्रमन् हिमाचलसमीपस्थं नगरमेकमगमत् । तस्य नातिदूरे वेणूनामतिगहनमेकं वनमभूत् । स्वयं तन्नगराभ्यन्तरं प्रविश्य रात्रौ कस्यचिद्गेहे बहिर्वेदिकायां सुष्वाप । अर्धरात्रसमये वेणुवनमध्ये रुदत्याः कस्याश्चिदबलाया

हाहाकारोऽभूत् । किमेतदिति पुरन्दरे दत्तकर्णे तिष्ठति, 'भो महाजनाः, मां परित्रायध्वम् । एष कोऽपि राक्षसो मां मारयति' इति वर्णावलिरश्रूयत । ततः प्रभातसमये सविस्मयं पुरन्दरस्तन्नगरवासिनो जनानपृच्छत् । जनाः—'अत्र वेणुवनमध्ये प्रतिदिनमेवं रात्रौ रोदनध्वनिः श्रूयते । परं तु कोऽपि भयान्न गच्छति । न विचारयति च । ' इति जनैर्विदितवृत्तान्तः पुरन्दरस्ततो निष्क्रम्य स्वेच्छया कञ्चित् कालं परिभ्रम्य स्वनगरमागत्य राजानमद्राक्षीत् ।

राजा च 'वत्स, पुरन्दर, देशान् पर्यटन् बहूनि दिवसान्यनयः । अतिमहता चानेन समयेन किं किमद्भुतमद्राक्षीः ? किं किमश्रौषीः?' इत्यपृच्छत् । पुरन्दरस्तु वेणुवनवृत्तान्तमकथयत् । तत्कौतुकं श्रुत्वा तेन सह तन्नगरमवगाह्य निशीथे मध्येवनमाक्रन्दनध्वनिमाकर्ण्य कृपाणपाणिः स्वयमेक एव तदरण्यं विवेश । तत्र चातिकरुणं रुदतीमनाथां मानुषीं पीडयन्तं राक्षसमेकमपश्यत् । अब्रवीच्च 'रे पापिष्ठ, स्त्रियमनाथां किमर्थं मारयसि ?' राक्षसः—'तव किमनेन विचारेण ? यथागतमपसर । अन्यथा त्वमपि वृथैव मरिष्यसि । ' अनन्तरमुभयोर्विवादो महानभूत् । ततो राजा कृपाणमुत्कृष्य राक्षसं जघान । हते च तस्मिन्, छिन्नमूल इव महीरुहे निपतिते, प्रहृष्टा सा वनिता ससंभ्रमं समागत्य राज्ञः पादयोर्निपत्य बभाण—'स्वामिन्, तव प्रसादान्मम शापावसानमासीत् । महतो दुःखसागरादुद्धृतास्मि । ' राजा—'का त्वं ? कुतस्त्वामेष पापीयानपीडयत्? कियता कालेनैवंविधामवस्थामनुभवसि?' वनिता—'देव, विज्ञापयामि । अस्मिन्नेव नगरे महाधनसंपन्नः कश्चिद्ब्राह्म-

णोऽभूत् । तस्य भार्याहं व्यभिचारिणी । मम तस्मिन् प्रीतिलेशोऽपि नासीत् । तस्य तु मय्यतिमहाननुरागोऽवर्तत । रूपलावण्यसंपन्नाहं तेन संभोगार्थमसकृद्याचिताऽपि नैच्छम् । तथा यावज्जीवं काम-संतप्तो मे पतिर्देहावसानसमये मामशपत्—'अयि दुराचारे, त्वमेव मम मृतेर्मूलमसि यदेवं मम मनोरथं वितथमकार्षीः । अनुभव तदद्य प्रभृति तत्फलम् । वेणुवनवासी कश्चिद्राक्षसो भयङ्कररूपो रात्रौ त्वामनिच्छन्तीमपि बलादाकृष्य सुरतार्थं प्रतिदिनं पीडयिष्यति।' इति शप्त्वा मया सपादपतनमभियाचितो 'यदा परोपकारी महाधैर्य-संपन्नः कश्चिन्महापुरुषः समागत्य तं राक्षसं मारयिष्यति, तदा तव शापावसानं भविष्यती' त्युक्त्वा तनुमत्याक्षीत् । तदाप्रभृति भवदागमनमभिकाङ्क्षन्ती दैवादद्य भवताहं शापान्मोचितास्मि । अद्य मम प्राणाः शरीरान्निर्गमिष्यन्ति । मम नवघटपरिपूर्णं सुवर्ण-मस्ति । तद्वृथा यास्यति । त्वं तद्गृहाणे" ति धनस्थानं राज्ञे निवेद्य सा प्राणानत्यजत् । राजापि तन्नवघटपरिपूर्णं सुवर्णं पुरन्दराय वणिजे दत्त्वा तेन सहोज्जयिनीमवाप ।

इति कथां कथयित्वा सालभञ्जिका राजानं भोजमब्रवीत्—'भो राजन् एवंविधमौदार्यं धैर्यं वा किं त्वमात्मनि पश्यसि ?' राजा तच्छ्रुत्वा तूष्णीं बभूव ।

॥ इति द्वादशोपाख्यानम् ॥

## ॥ अथ त्रयोदशोपाख्यानम् ॥

नद्याः पूराद्विप्रमेकं सभार्यं तीरं नीत्वा तद्वितीर्णं च पुण्यं ।
दत्त्वा विप्रं मोचयामास कश्चिद्रक्षोरूपादेष इत्यद्य वक्ति ॥

पुनरप्येकदा सिंहासनमारुरुक्षासमागतं भोजभूपतिमपरा प्रतिमा जगाद—राजन्! प्रथमं विक्रमार्कदेवस्यौदार्यमाकर्णय। यदि रोचते तदनन्तरमुपविश। श्रूयताम्—

एकदा विक्रमार्को राज्यं मन्त्रिवर्गे निधाय स्वयं भूमिकान्तर-तिरोहितः पृथिवीपर्यटनाय निश्चक्राम। निर्गत्य च प्रतिनगरं त्रीणि त्रीणि दिवसानि गमयन्नेकदा नगरमेकमगमत्। तन्नगरसमीपनदी-तटस्थिते देवालये सर्वे महाजनाः कस्मादपि पौराणिकात् पुराणं शृण्वन्तीति निशम्य राजा नद्यां स्नात्वा देवालयं गत्वा देवं नमस्कृत्य महाजनसमीपे स्वयमुपविश्य पुराणश्लोकानेतानशृणोत्—

अनित्यानि शरीराणि विभवो नैव शाश्वतः।
नित्यं सन्निहितो मृत्युः कर्तव्यो धर्मसङ्ग्रहः॥ १७०॥
श्रूयतां धर्मसर्वस्वं यदुक्तं शास्त्रकोटिभिः।
परोपकारः पुण्याय पापाय परपीडनम्॥ १७१॥
यो दुःखितानि भूतानि दृष्ट्वा भवति दुःखितः।
सुखितानि सुखी चापि स धर्मात्मेति श्रूयते॥ १७२॥
नातो भूयस्तरो धर्मः कश्चिदस्यास्ति देहिनः।
प्राणिनां भयभीतानामभयं यत् प्रयच्छति॥ १७३॥
वरमेकस्य सत्त्वस्य प्रदानं जीवितस्य तु।
न च विप्रसहस्रेभ्यो गोसहस्रं दिने दिने॥ १७४॥

अभयं सर्वभूतेभ्यो यो ददाति दयापरः ।
तस्य देहविमुक्तस्य क्षय एव न विद्यते ॥  १७५॥

होमधेनुधनादीनां दातारः सुलभा भुवि ।
दुर्लभः पुरुषो लोके सर्वजीवदयापरः ॥  १७६॥

महतामपि यज्ञानां कालेन क्षीयते फलम् ।
फलस्याभयदानस्य क्षय एव न विद्यते ॥  १७७॥

दत्तमिष्टं तपस्तप्तं तीर्थयात्रा श्रुतं तथा ।
सर्वाण्यभयदानस्य कलां नार्हन्ति षोडशीम् ॥  १७८॥

चतुस्सागरपर्यन्तां यो दद्याद्वसुधामिमाम् ।
यश्चाभयं च भूतेभ्यस्तयोरभयदोऽधिकः ॥  १७९॥

अध्रुवेण शरीरेण प्रतिक्षणविनाशिना ।
ध्रुवं यो नार्जयेद्धर्मं स शोच्यो मूढचेतनः ॥  १८०॥

यदि प्राण्युपकाराय देहोऽयं नोपयुज्यते ।
ततः किमपकारोऽस्य प्रत्यहं क्रियते नृभिः ॥  १८१॥

एकतः क्रतवः सर्वे समग्रवरदक्षिणाः ।
एकतो भयभीतस्य प्राणिनः प्राणरक्षणम् ॥  १८२॥

परोपकारव्यापारपरो यः पुरुषो भुवि ।
स सम्पदं समाप्नोति परादपि च या परा ॥—  १८३॥

एवं पुराणश्लोककथनसमये कश्चिद्ब्राह्मणः पत्न्या सह नदी-मुत्तितीर्षुर्नदीमवगाह्य महापूरेण नीयमानो हाहाकारं कुर्वन्नदी-तटे पुराणश्रवणतत्परान् महाजनानुद्दिश्यैवमवादीत्—'भो भो महा-

जनास्त्रायध्वं, त्रायध्वं, वृद्धः सपत्नीको ब्राह्मणोऽहं नदीप्रवाहे मुहुर्मुहुर्निमज्जन्नेष जीवितं त्यक्ष्यामि । यः कोऽपि सत्त्वाधिको धार्मिको मम सभार्यस्य प्राणान् ददातु ।' इति प्रार्थयमानस्य दीन-ध्वनिं श्रुत्वा महाजनाः सर्वेऽपि सदयमपश्यन् । न कोऽपि तस्या-भयं दातुं प्रबभूव । प्रवाहात् तमुत्कूलयितुं कोऽपि न शशाक । ततो विक्रमार्को राजा 'मा भैषी'रिति धीरमुद्घुष्य नदीमध्यं प्रविश्य पत्न्या सह तं ब्राह्मणं महापूरादाकृष्य तटमानिनाय । राजन् ! तस्य कियानानन्दः स्यादिति भवानेव विचारयतु । ब्राह्मणोऽपि स्वस्थः सन् राजानमवदत्—"भो महापुरुष ! ममैतच्छरीरं पुरा पितृभ्यामजनिष्ट । ततोऽस्य गायत्र्या द्वितीयं जन्म । इदानीं भव-तस्तृतीयं जन्म प्राप्तम् । अतः, प्राणदानान्महोपकारिणस्तवाहं किमुपकरिष्यामीति यदि विरमामि, मम जीवितं मुधैव स्यात् । अतो यथाशक्त्युपकरोमि, प्रतिगृहाण । गोदावर्युदकमध्ये द्वादश वर्षाणि नामत्रयमन्त्रमजपम् । तत्पुण्यं तुभ्यं दीयते । अन्यच्च, यत् कृच्छ्रचान्द्रायणादिना संपादितं सुकृतमस्ति, तत् सर्वं गृहाण ।" इत्युक्त्वा राज्ञे तत् समग्रं पुण्यं समर्प्याऽऽशिषं दत्त्वा पत्न्या सह ब्राह्मणो निजस्थानं जगाम ।

अस्मिन्नेव समये भीषणः कोऽपि ब्रह्मराक्षसो राजसमीप-माजगाम । ब्राह्मणाः संभ्रान्तास्तमपश्यन् । राजाऽपि तं दृष्ट्वाऽ-पृच्छत्—'भो महापुरुष, कस्त्वम् ? कुतः समागच्छसि ?' राक्ष-सः—"अहमत्रैव नगरे ब्राह्मणः कश्चिद्दुष्प्रतिग्रहजीवी दुर्याचनापर-श्च । तथा विद्यागर्वात् सर्वान् वृद्धानसकृददूषयम् । तत्पातकवशाद-

स्मत्पुरस्थितेऽश्वत्थपादपे ब्रह्मराक्षसो भूत्वा नियुतं वर्षाणि तिष्ठामि । अद्य भवतोरुभयोर्गोष्ठीमाकर्ण्य समागतोऽस्मि । यतो निर्विशेषं सर्वेषामुपकरोषि, तन्ममाप्युपकर्तुमर्हसि ।' राजा—'किं वाञ्छसि ?' राक्षसः—'इदानीं ब्राह्मणेन तुभ्यं यत् सुकृतं दत्तं, तन्मह्यं दीयतां, तेन पुण्येनाहमस्माद्दोषादुत्तीर्णो भविष्यामि ।' राजा तदानीमेव निश्शङ्कं तस्मै तत्पुण्यं ददौ । सोऽपि तेन पुण्येन तस्मात्पापजन्मनो निवृत्तो दिव्यरूपधरः सन् राजानं प्रशस्य दिवं जगाम । राजाऽपि तत्रत्यान् महापुरुषानापृच्छ्य स्वनगरमगमत् ।

इति कथां सालभञ्जिका कथयामास । भोजोऽपि तदाकर्ण्य विफलमनोरथो जगाम ॥

इति त्रयोदशोपाख्यानम् ॥

---

## ॥ अथ चतुर्दशोपाख्यानम् ॥

कस्मादपि मुनिवर्याच्छिवलिङ्गं किञ्चिदेष सङ्गृह्य ।
आगच्छन् विप्राय प्रादादिति सालभञ्जिका वदति ॥ १८४॥

भूयोऽपि कदाचन भोजे राजनि सिंहासनमारोढुमभिलषति, अपरा पाञ्चालिका व्याजहार । वामन इव वृक्षाग्रस्थितं फलमिदमधिगन्तुमभिलषसि । आकर्णय विक्रमार्कस्यौदार्यम् ।

एकदा विक्रमो राजा पृथ्वीमध्ये कस्मिन्स्थाने किमाश्चर्यमस्ति, का वार्ता, किं तीर्थं, को वा देवतावासोऽस्तीति विलोकयितुं तपस्विवेषेण परिभ्रमन् नगरमेकमगमत् । तन्नगरसमीपे तपोवनमेकम-

दृश्यत । तस्मिन्नेका नदी प्रवहति स्म । तत्र जगदम्बिकामहाप्रासादोऽभूत् । राजाऽपि तत्र नदीजले स्नात्वा देवतां सप्रदक्षिणं प्रणम्य ततो निर्जगाम । तत्रान्तरेऽवधूतवासा नाम कश्चिद्योगी तत्राऽगत्य कृतप्रणामं राजानमन्वयुङ्क्त । 'को भवान्?' तदा राजा—'अध्वनीनोऽहं कोऽपि तीर्थयात्राशीलः ।' योगी—'न त्वं विक्रमार्कः? एकदा त्वामुज्जयिन्यामपश्यम् । अतोऽहं त्वां जानामि । किमर्थमागतोऽसि?' राजाऽब्रवीत्—'स्वामिन्! वसुमतीं परिभ्रमेयमिति महत्युत्कण्ठा समभूत् । तेन च सर्वमाश्चर्यं विलोक्यते, भवादृशानां महतां संदर्शनमपि भविष्यती' ति । अवधूतवासा अब्रवीत् 'राजन्! तत् तादृशं राज्यं परित्यज्य कथं देशान्तरं परिभ्रमसि? कुतोऽपि मध्ये विकृतिश्चेत् किं करिष्यसि?' राजा—'अहं सर्वमपि राज्यभारं मन्त्रिहस्ते निधाय समागच्छम् ।' अवधूतवासाः—"अये! त्वया नीतिशास्त्रविरोधः क्रियते । उक्तञ्च—

नियोगिहस्तार्पितराज्यभारास्तिष्ठन्ति ये स्वैरविहारधीराः ।
बिडालबृन्दार्पितदुग्धभाण्डाः स्वपन्ति ते मूढधियः क्षितीन्द्राः ॥

अन्यच्च, राज्यं स्ववशंवदमभूदिति नोपेक्षणीयम् । स्वायत्तमपि पुनः सुदृढं कर्तव्यम्—

कृषिर्विद्या वणिग्भार्या धनं साम्राज्यसंपदः ।
कर्तव्यं सुदृढं सर्वं कृष्णसर्पमुखं यथा ॥"

तच्छ्रुत्वा राजा बभाण—"भगवन्! सर्वमेतत्पौरुषमनर्थकम् । किं तु, दैवमेव सर्वस्य मूलम् । सुदृढेऽपि राज्ये, सत्यामपि साधनसमृद्धौ, संपन्नेऽपि पौरुषे, दैववैमुख्यान्नरः परिभूयते । तथा हि ।

नेता यस्य बृहस्पतिः प्रहरणं वज्रं सुराः सैनिकाः
स्वर्गो निग्रहदुर्गमः खलु हरेरैरावणो वारणः ।
इत्याश्चर्यबलान्वितोऽपि बलभिद्भग्नः परैः संगरे
तद्युक्तं ननु दैवमेव शरणं धिग्धिग्वृथा पौरुषम् ॥ १८७॥

तथा च ।

नैवाऽऽकृतिः फलति नैव कुलं न शीलं
विद्याऽपि नैव न च यत्नकृताऽपि सेवा ।
भाग्यानि पूर्वतपसा किल संचितानि
काले फलन्ति पुरुषस्य यथैव वृक्षाः ॥ १८८॥

अपिच ।

येनाखण्डलदन्तिदन्तमुसलान्याकुञ्चितान्याहवे
धारा येन पिनाकपाणिपरशोश्चाकुण्ठिता चाहृता ।
जाया दाशरथेः प्रभाववसतेः संक्लेशिता जानकी
दैत्यः सोऽपि हतो विधिर्हि बलवान् लोकैरलङ्घ्यः खलु ॥

वृद्धौ क्षये च दैवमेव निदानमिति किं स्वामी न जानाति ?

भग्नाशस्य करण्डपिण्डिततनोर्म्लानेन्द्रियस्य क्षुधा
कृत्वाऽऽखुर्विवरं स्वयं निपतितो नक्तं मुखे भोगिनः ।
तृप्तस्तत्पिशितेन सत्वरमसौ तेनैव यातः पथा
स्वस्थास्तिष्ठत दैवमेव हि परं वृद्धौ क्षये कारणम् ॥ १९०॥

अन्यच्च—

अरक्षितं तिष्ठति दैवरक्षितं
सुरक्षितं दैवहतं विनश्यति ।

जीवेत् तथाऽन्धोऽपि वने विसर्जितः
कृतप्रयत्नोऽपि गृहे न जीवति ॥ १९१॥

अपिच, भगवन्! श्रूयताम्। राजशेखरो नाम राजा कश्चिदासीत्। स चैकदा मनस्येवमकरोत्—'यो मम तरुतलनिवासिनो राज्यमदिशत्, स एव राज्यं निर्वहतु।' इति विसृष्टभारे राजनि, देवः स्वयं वैरिणो निर्जित्य राज्यमकण्टकमकरोत्।"

इतीमां कथां कथयति वसुन्धराधिनाथे, तपस्वी प्रहृष्टस्तस्मै काश्मीरलिङ्गमेकं दत्त्वा बभाण—भो राजन्, एतत् काश्मीरलिङ्गं चिन्तामणिरिव चिन्तितानि वस्तूनि ददाति, तस्मादेतत् साधु पूजय।' राजा बाढमिति तं प्रणम्य तदादायागच्छन् नगरमार्गे कञ्चन ब्राह्मणमपश्यत्। स च राजानमुद्दिश्य—

पातु वो गिरिजा माता यस्य द्वादशलोचनः।
तथैव गिरिजामाता द्वादशार्धार्धलोचनः ॥ १९२॥

इत्याशिषमुक्त्वाब्रवीत्—'राजन, मम सुचिराभ्यर्चितं शिवलिङ्गं केनाप्यपहृतम्। त्रिचतुरैर्दिवसैरहमुपवसामि। अनाराध्य लिङ्गं न भक्षयेयम्। यदीदं लिङ्गं दास्यसि, तर्हि कृतार्थो भविष्यामि।' राजा तु तच्छ्रुत्वा तस्मै तल्लिङ्गं दत्त्वा निजान्तःपुरं जगाम।

इतीमां कथां भोजः श्रुत्वा नाहमर्होमीति विरराम।

इति चतुर्दशोपाख्यानम् ॥

---

## ॥ अथ पञ्चदशोपाख्यानम् ॥

नगर्यां कस्याञ्चिद्विबुधवनितायास्तु भवने
कटाहे सम्मग्नो ज्वलनपरितप्यत्तिलरसे ।
उदन्तं यस्तस्याः समवददमुष्मै प्रियतमां
ददावेनामेष क्षितिपतिरिति स्वादु वदति ॥ १९३॥

अथैकदा यथापूर्वं सिंहासनमारोढुमागच्छति धाराधिनाथे, सालभञ्जिकान्या विहस्य राजानमभाणीत्—कथमिव भूयोऽपि समागमः? अद्यापि समाकर्णय तस्य विक्रमस्य महौदार्यम् ।

विक्रमे राज्यं कुर्वति तस्य पुरोहितो वसुमित्रो नाम । सोऽत्यन्तरूपवान्, सकलकलाभिज्ञः । राज्ञोऽत्यन्तं प्रियतमः, परोपकारी, सर्वलोकप्रियो, महाधनसंपन्नश्च । तस्य चैवंविधस्य चेतस्येवं बुद्धिरुदभूत्—

उपार्जितानां पापानां गङ्गास्नानादृते क्षयो नास्ति । उक्तञ्च-

तपसा ब्रह्मचर्येण यज्ञैस्त्यागेन वा पुनः ।
गतिं न लभते जन्तुर्गङ्गां संसेव्य तु व्रजेत् ॥ १९४॥

स्नातानां शुचिभिस्तोयैर्गाङ्गेयैर्नियतात्मनां ।
पुष्टिर्भवति या पुंसां न सा क्रतुशतैरपि ॥ १९५॥

अपहृत्य तमस्तीव्रं यथा यात्युदयं रविः ।
तथापहृत्य पापानि भाति गङ्गाजलाप्लुतः ॥ १९६॥

अग्निं प्राप्य यथा सद्यस्तूलराशिर्विनश्यति ।
तथा गङ्गाजलेनैव सर्वपापं विनश्यति ॥ १९७॥

चान्द्रायणसहस्रेण यः कुर्यात् कायशोषणं ।
पिबेद्यश्चापि गङ्गाम्भः समौ सत्यमुभावपि ॥ १९८॥

यस्तु सूर्यांशुसंतप्तो गाङ्गेयं सलिलं पिबेत् ।
विधियुक्तं च पीत्वापि सर्वपापात् प्रमुच्यते ॥ १९९॥

भूतानामपि सर्वेषां दुःखोपहतचेतसां ।
गतिमन्वेषमाणानां नास्ति गङ्गासमा गतिः ॥ २००॥

महद्भिरशुभैर्ग्रस्तान् भूतांश्च प्रसभेन सा ।
उद्धृत्य नरकाद्घोराद्गङ्गा रक्षति सेवनात् ॥ २०१॥

सप्त पूर्वान् सप्त परान् पितॄन् तेभ्यश्च ये परे ।
परं तारयते गङ्गा दृष्टा पीताऽवगाहिता ॥ २०२॥

दर्शनात् स्पर्शनाद्ध्यानात् तथा गङ्गेति कीर्तनात् ।
पुनाति पुरुषं पुण्या शतशोऽथ सहस्रशः ॥ २०३॥

ते जात्यन्धेषु जात्यन्धा मृगेषु च मृगाः स्मृताः ।
समर्था ये न पश्यन्ति गङ्गां पापप्रणाशिनीम् ॥ २०४॥

एवं विचार्य वाराणसीं जगाम । तत्र गङ्गायां यथाविधि स्नात्वा विश्वेश्वरं माधवं च प्रणम्याभ्यर्च्य पञ्चक्रोशयात्रां विधाय पुनः प्रयागे माघस्नानं गयाश्राद्धं च विधाय स्वनगराभिमुखमागच्छन् मार्गे नगरमेकमगमत् ।

तत्र नगरे शापदग्धा सुराङ्गना काचिद्राज्यमकरोत् । तस्याः पतिर्नासीत् । तत्र लक्ष्मीनारायणस्य महान् प्रासादोऽदृश्यत । तस्य च गोपुराग्रे चिरात् तप्ते महति लोहकटाहे तैलं संतप्यते स्म । तत्र

नियुक्ताः पुरुषाः वैदेशिकान् जनानेवं ब्रुवन्तोऽवर्तन्त—'यः सत्त्वाधिकः कोऽपि पुरुषोऽस्मिन् कटाहे निपतेत्, तस्येयं मन्मथसञ्जीविनी नामाप्सराः कण्ठे मालिकामर्पयिष्यति।' इति। वसुमित्रोऽपि तं वृत्तान्तं श्रुत्वा तत् सर्वं दृष्ट्वा स्वनगरमाजगाम।

आगत्य च सर्वैर्बन्धुभिः सह मिळित्वा प्रभाते राजमन्दिरं गत्वा राजानं दृष्ट्वा राज्ञे गङ्गोदकं विश्वेश्वरप्रसादं च दत्त्वोपविवेश। राजा—'आर्य वसुमित्र, दिष्ट्या भवन्तं चिरायापश्यम्। किं सुखेन निर्वर्तिता पुण्यतीर्थयात्रा?' वसुमित्रः—भो राजन्, तव प्रसादात् तीर्थयात्रां विधाय क्षेमेण समागतोऽस्मि।' राजा—'तत्र देशान्तरे किं किमपूर्वमपश्यः?। वसुमित्रः सुराङ्गनातप्ततैलवृत्तान्तमकथयत्।

तच्छ्रुत्वा राजाऽपि तेन सह तत्स्थानं गत्वा तत्र नद्यां कृताभिषेको लक्ष्मीनारायणं नमस्कृत्य तप्ततैलमध्ये पपात। तत्रत्या जना महान्तं कोलाहलमकुर्वन्। राज्ञस्तु शरीरं मांसपिण्डाकारमभूत्। तच्छ्रुत्वा मन्मथसञ्जीविनी पीयूषमानीय मांसपिण्डमभिषिषेच। ततो राजा दिव्यरूपधरः कुमारः संवृत्तः। ततो मन्मथसञ्जीविनी कुसुममालां महीपतेः कण्ठे निवेशयितुमाजगाम। तदा राजा—'भद्रे, मदीयासि मामकं छन्दमनुवर्तस्व।' मन्मथसञ्जीविनी—'आदिशत्वार्यपुत्रः' राजा—'तर्ह्यमुं मम पुरोहितं वृणीष्व।' मन्मथसञ्जीविनी महाप्रसाद इति पुरोहितकण्ठे कुसुममालामक्षिपत्। राजाऽपि तयोर्विवाहं कृत्वा तं वसुमित्रं तत्रैव राज्येऽभिषिच्य निजनगरमगमत्।

इमां कथां कथयित्वा सालभञ्जिका राजानमब्रवीत् । 'किमाकर्णितमौदार्यं देवस्य विक्रमार्कस्य ? तदुपरि यथार्हं विधेहि । ' तच्छ्रुत्वा राजा तूष्णीम्भूतस्तस्थौ ।

॥ इति पञ्चदशोपाख्यानम् ॥

---

## ॥ अथ षोडशोपाख्यानम् ॥

विक्रमधराधिनाथो विप्राय प्रवयसे दरिद्राय ।
कन्यासमानभारं काञ्चनमदिशन्मुदेति वक्त्येषा ॥ २०५॥

भूयोऽपि कदाचन ससम्भ्रममागच्छन्तं भोजमपरा पाञ्चालिका जगाद—राजन्नुपसंहर सम्भ्रमं, तिष्ठ ; सर्वमप्याकर्णय विक्रमार्कस्य वदान्यभावम् ।

राजा विक्रमस्त्वेकदा दिग्विजयार्थं कृतसन्नाहो निर्गत्य पूर्वदक्षिणपश्चिमोत्तरा दिशो विदिशश्च परिभ्रम्य सर्वानपि नृपतीन् निजपादपद्मसमाक्रान्तान् विधाय तैः समर्पिता रथगजाश्वादीरुपदाः स्वीकृत्य निजनगरीमुज्जयिनीं प्रति समागत्य यावत् प्राविविक्षत्, तावत् प्रधानो दैवज्ञः प्राह—'देव, चत्वारो वासरा नार्हन्ति पुरप्रवेशम् । ' तच्छ्रुत्वा राजा नगराद्बहिरुद्याने निवासं परिकल्पयेति सचिवमादिदेश । सुमन्त्रो नाम सचिवः ससम्भ्रमं समुचितं निवासं कारयामास । तत्रान्तरे ऋतुर्वसन्तोऽपि शनैरुद्यानं सिषेवे । तदा मन्त्री राजानमब्रवीत्—देव, दिष्ट्या समयः कुसुमाकरोऽपि समागमत् । पश्य—

वकुळा मुकुळान् वहन्ति सद्यः सकलाशा भ्रमरीनिनादगीताः ।
कमलायतलोचना वनान्ते विचरन्ति प्रमदाः प्रसूनलोलाः ॥

अपि च ।

माकन्दमञ्ज्यमकरन्दमहानुरागा-
दिन्दिन्दिरा निबिडयन्ति समन्द्रनादाः ।
मन्दानिलाश्च वनितावदनारविन्दा-
मोदाधिवासमधुरा भुवि वान्त्यजस्रम् ॥ २०७॥

लतां पुष्पवतीं स्पृष्ट्वा स्नातो विमलवारिषु ।
पुनः स्पर्शनशङ्कीव मन्दं चलति मारुतः ॥ २०८॥

एवं ब्रुवाणं मन्त्रिणं राजा वसन्तपूजासंविधानसंपादने न्ययुङ्क्त । ततः स मन्त्री सुमनोहरं मण्टपमेकं कारयित्वा वेदशास्त्रपुराणज्ञान् ब्राह्मणान् तौर्यत्रिकनिपुणान् नर्तकीर्विलासिनीश्च समाहूयत् । तत्र सभामध्ये नवरत्नखचिते सिंहासने लक्ष्मीनारायणप्रतिमाद्वयं प्रतिष्ठाप्य, तस्य पूजार्थं कुङ्कुमकस्तूरीकर्पूरचन्दनागुरुप्रभृतीनि सुगन्धद्रव्याणि मल्लिकाशतपत्रमरुवकचम्पककेतकीकरवीरप्रभृतीनि कुसुमानि च समानीय सर्वमपि सज्जीकृतमिति राज्ञे निवेदयामास । राजापि स्वयमेव देवं संपूज्य ब्राह्मणान् यथार्हमभ्यर्च्य सर्वानपि लोकान् यथोचितं संभाव्य वादित्रादिविनोदेन कालं नयन् सुचिरं सुखमुवास ।

तत्रान्तरे कश्चिद्वृद्धो ब्राह्मणो हस्ते काञ्चन कन्यकां गृहीत्वा राजसमीपमागत्य——

कल्याणदायि भवतोऽस्तु पिनाकपाणेः
पाणिग्रहे भुजगकङ्कणभीषितायाः ।
सम्भ्रान्तदृष्टि सहसैव 'नमः शिवायै'
त्युक्त्वार्धलज्जितनतं मुखमम्बिकायाः ॥' २०९॥

इत्याशिषं प्रयुज्य राज्ञा निर्दिष्टां ब्रुसीमास्थाय राजानमेवमवादीत् 'राजन्, विज्ञापनमस्ति।' राजा—निश्शङ्कं निवेदयतु भवान्' ब्राह्मणः—"अहं नदीवर्धमाननामनगरनिवासी। ममाष्टौ पुत्राः समजायन्त। कन्यका पुनः क्वापि नाजनि। ततः सभार्योऽहं जगदम्बिकायाः पुरत एवं संकल्पमकार्षम्। 'अम्ब यदि मम कन्यका भविष्यति, तां त्वन्नामाङ्कितां तत्तुलितेन सुवर्णेन सह कस्मैचिच्चतुर्वेदविदे वराय दास्यामी'ति। ततः कतिपयैरेव दिवसैर्जगदम्बिकाप्रसादादेषा कन्या जाता। इदानीमस्याः पाणिग्रहणसमयः समतिक्रामति। अतोऽनया तुलितं सुवर्णं दातुं विक्रमादन्यः कोऽपि नास्तीति श्रुत्वा तवान्तिकमहमागमम्।" राजा—'साधु समनुष्ठितं त्वया, यावतो धनस्य तृप्यसि, तावद्गृहाणे'त्युक्त्वा भाण्डारिकमाहूयादिदेश 'एतस्मै ब्राह्मणायैतत्कन्यकामितं सुवर्णं देहि। भूयोऽप्यष्टकोटिसुवर्णं दीयता'मिति। कोशाध्यक्षोऽपि महाप्रसाद इति विप्राय तावत् काञ्चनं ददौ। ब्राह्मणोऽप्यतिसंतुष्टः सन् कन्यकया सह जगाम। ततो राजाऽपि शुभे मुहूर्ते पुरं विवेश।

इति कथां पाञ्चालिकोदीरितां निशम्य भोजो निर्जगाम।

इति षोडशोपाख्यानम्.

## ॥ अथ सप्तदशोपाख्यानम् ॥

केनापि राज्ञा वसुलाभहेतोर्दिनेदिने कल्पितमात्मनाशम् ।
निशम्य तत्साहसमन्तरेण तस्येप्सितं चक्र इतीह वक्ति ॥

पुनरपि राजानं भोजमागतमन्या सालभञ्जिका भणति—राजन्, अत्र सिंहासने समुपवेष्टुं स एव क्षमो यस्य विक्रमस्यौदार्यादयो गुणाः सन्ति ।' राजा—'सालभञ्जिके, कथय तस्यौदार्यादिवृत्तान्तम् ।' सालभञ्जिका भणति । शृणु राजन् । तस्यौदार्यमेव त्रिभुवने कीर्तिं वितस्तार । सर्वे जनास्तमेव राजानं तुष्टुवुः । अन्यच्च, अर्थिनां स्वस्तिवचनं दातॄणां प्रीत्यै भवति ; नतु शौर्यादयो गुणाः । उक्तञ्च—

युध्यन्ते पक्षिपशवः पठन्ति शुकशारिकाः ।
ददाति कोऽपि दानं यः स शूरः स च पण्डितः ॥ २११॥

तथा च—

दातॄणामेव सुप्रीतिः स्वस्तिवाचा यथार्थिनः ।
संप्रहर्षो न हि तथा रणदुन्दुभिनिस्वनैः ॥ २१२॥

शौर्यज्ञानानुष्ठानादयो गुणाः सर्वेषामपि भविष्यन्ति, न त्वौदार्यम् ।

एवं त्यागगुणः श्लाघ्यः सर्वेषु गुणराशिषु ।
त्यागाज्जगति पूज्यन्ते पशुपाषाणपादपाः ॥ २१३॥

अन्यच्च—

त्यागो गुणो गुणशतादधिको मतो मे
विद्या विभूषयति तं यदि किं ब्रवीमि ।

शौर्यं हि नाम यदि तत्र नमोऽस्तु तस्मै
तच्च त्रयं यदि भवेदतिचित्रमेतत् ॥ २१४॥

तच्चतुष्टयं तस्मिन् विक्रमार्केऽवर्तत ।

एकदा परमण्डले कस्यचिद्राज्ञः पुरतः केनचित् स्तुतिपाठकेन विक्रमस्य गुणावलिरपाठि । तां श्रुत्वा राजा परमसूयया वन्दिनमुवाच—'रे वन्दिन् ! कुतः स्तुतिपाठका विक्रमार्कमेव स्तुवन्ति? किमन्यो राजा तादृशो नास्ति?' वन्दी—देव! धैर्ये, त्यागे, परोपकारे, साहसे, दयायां च तेन सदृशो राजा त्रिभुवनेऽपि नास्ति । परोपकारकरणे स्वदेहेऽपि तस्य महात्मनो ममत्वं नास्ति ' तदाकर्ण्य स राजा 'अहमपि परोपकारं करिष्या'मीति मनसि कृत्वा कञ्चन योगिनमाहूयोवाच—'भो योगिन् ! परोपकारार्थे मम प्रीतिरनुदिनमेधते; यदि कश्चिदुपायः स्यात् तं निवेदय । ' योगी—'भोः किं वा नास्ति ? राजा—'अस्ति चेदुपदिश, साधयामि । ' योगी—'कृष्णचतुर्दश्यां चतुष्षष्टियोगिनीचक्रं पूजय । तत्पुरतो जपं कृत्वा दशांशहोमं विधेहि; होमावसाने पूर्णाहुतिनिमित्तं स्वशरीरमेवोपकल्पय; ततो योगिनीचक्रं प्रसन्नं भविष्यति । यत् त्वया प्रार्थ्यते तद्दास्यति । पुनरप्रतिमं शरीरं तव भविष्यति । ' तच्छ्रुत्वा राजा सर्वमपि तथैवानुष्ठाय पूर्णाहुतिनिमित्तं स्वयमेवाग्नौ पपात । ततो योगिनचिक्रदेवता प्रसन्ना भूत्वा राज्ञे नवं शरीरं दत्त्वा भणति स्म—'राजन् ! तुष्टाऽस्मि, वरं वृणीष्व,' राजा—'अम्ब ! प्रसन्ना यदि, तर्हि मम गृहं सप्तघटसुवर्णपरिपूर्णं विधेहि । ' देवता—'त्वमेवं प्रतिदिनं शरीरमग्नौ होष्यसि चेदहं तथा करिष्यामि । 'राजाऽपि तथेत्यूरीकृत्य नित्यमग्नौ शरीरं सुवर्णार्थं जुह्वदास्त ।

एकदा विक्रमार्कोऽपि तां वार्तां श्रुत्वा तत् स्थानं समागत्य पूर्णाहुतिसमये स्वयमेवाग्नौ पपात । ततो योगिनी स्वयमचिन्तयत्—'किमद्यतनं मांसमतीव स्वादुतरं दृश्यते ! अस्य हृदयं सारभूतमिवास्ती' ति । पुनः शरीरं दत्त्वा जगाद—'भो महासत्त्व ! को । भवान् ? तव शरीरत्यागेन किं प्रयोजनम् ? तद्ब्रूहि दास्यामी ' ति । राजा—'यदि प्रसन्नाऽसि, तर्ह्ययं राजा प्रतिदिनं मरणान्महाकष्टमनुभवति, तन्निवारयतु भवती । अस्य गृहे सप्तमहाघटाः प्रतिदिनं सुवर्णेन पूरणीयाः । ' योगिनी तथा करिष्यामीत्यङ्गीकृत्य तस्य गृहे प्रतिदिनं सप्त महाघटान् सुवर्णेन पूरयामास । राजानं मरणान्निवारयामास । विक्रमोऽपि स्वनगरं प्रत्यागतः ।

इमां कथां कथयित्वा सालभञ्जिका राजानमब्रवीत्—'राजन् त्वयीदृशः परोपकारः किमस्ति ? ' तच्छ्रुत्वा राजा तूष्णीं बभूव ।

इति सप्तदशोपाख्यानम्.

## अथाष्टादशोपाख्यानम् ॥

उदयशिखरिगङ्गास्तम्भमार्गेण गत्वा
प्रतिदिनमतिमात्रस्वर्णदां कर्णभूषां ।
खरकिरणसकाशात् प्राप्य तां ब्राह्मणाय
व्यतरदतिदरिद्रायेति सैषाऽद्य वक्ति ॥ २१५॥

पुनरपि राजनि सिंहासनमारोढुमागच्छत्यपरा पाञ्चालिका प्राह—'भो राजन् ! विक्रमार्कस्यौदार्यादिगुणा यस्य सन्ति, तेनैवै-

तत्सिंहासनमध्यासितव्यम् ।' राजा—कथय तस्यौदार्यादिवृत्तान्तम्। साऽब्रवीत्—राजन्! श्रूयताम्—

विक्रमार्को राजा नीतिमणुमात्रमपि नोल्लङ्घयेत्। मणिपुरे गोविन्दशर्मा नाम ब्राह्मणः स्वपुत्राय नीतीरुपादिक्षत्; अहमप्यश्रौषम्; तत् तुभ्यं निवेदयामि, श्रूयताम्।

मनीषी पुरुषो दुर्जनैः सह संसर्गं न कुर्वीत; यतो महानर्थाः प्रवर्तेरन्। उक्तश्च—

दुर्वृत्तसंगतिरनर्थपरम्पराया
हेतुः सतामधिगतं वचनीयमत्र।
लङ्केश्वरे हरति दाशरथेः कलत्रं
प्राप्नोति बन्धमथ दक्षिणसिन्धुराजः॥ २१६॥

तस्मात् सज्जनसङ्गं विदधीत। लोके सत्सङ्गात् परो नास्ति। उक्तं च—

कन्दलयत्यानन्दं निन्दत्यनिलेन्दुचन्दनानि भृशं।
मण्डयति मन्दहासं संधत्ते संपदोऽपि सत्सङ्गः॥ २१७॥

अन्यच्च, केनापि वैरं न कुर्वीत। परेषां संतापं न कुर्वीत। अपराधं विना भृत्यान् न दण्डयेत्। महादोषं विना भार्यां न त्यजेत्; यतोऽक्षयं नरकं भवेत्।

प्रज्ञासंपादने दक्षां वीरसूं प्रियवादिनीम्।
योऽदृष्टदोषां त्यजति सोऽक्षयं नरकं व्रजेत्॥ २१८॥

लक्ष्मीः स्थिरेति न मन्येत; यतोऽत्यन्तचञ्चला सा उक्तं च—

अनुभवत दत्त वित्तं मान्यं मानयत सज्जनं भजत ।
अतिपरुषपवनलुलितां दीपशिखेवातिचञ्चला लक्ष्मीः ॥ २१९॥

स्त्रीभ्यो गुह्यं न निवेदयेत्। भविष्यच्चिन्तां न कुर्यात्। वैरिणामपि हितमेव चिन्तयेत् । दानाध्ययनादिभिर्विना दिवसं मुधा नापनयेत् । पितरौ सेवेत । चोरैः सह न सल्लपेत्। कदाऽपि निष्ठुराणि न भाषेत । अल्पनिमित्तं बहुव्ययं न कल्पयेत् । उक्तं च—

न स्वल्पस्य कृते भूरि नाशयेन्मतिमान् नरः ।
एतदेव हि पाण्डित्यं यत् स्वल्पाद्भूरिरक्षणम् ॥ २२०॥

आर्येभ्यो दद्यात् । धर्मस्थाने मृषा न भाषेत । मनसा वाचा कर्मणा परोपकारं कुर्वीत । ये परोपकारिणस्ते सुजनाः । एतत् सामान्यतः पुरुषाणां नीतिशास्त्रमुपदिष्टम् ।

स तु विक्रमो राजा स्वभावत एव सकलनीतिशास्त्रज्ञः । एवं काले गच्छति, एकदा कश्चिद्वैदेशिको राजानं दृष्ट्वोपाविशत् । राजा—'भोः कुत्रत्यो भवान् ?' पुरुषः—'भो राजन् ! अहं वैदेशिकः, मम कोऽपि निवासो नास्ति; सर्वदा परिभ्रमन्नेव कालं नयामि ।' राजा—'पृथिवीपर्यटनात् त्वया किं किमपूर्वं दृष्टम् ? कथय ।' पुरुषः—"उदयपर्वते महानादित्यस्य प्रासादोऽस्ति । तत्र गङ्गा नाम काऽपि नदी प्रवहति । तद्गङ्गाप्रवाहात् कश्चित् सुवर्णस्तम्भो निर्गच्छति । तस्योपरि नवरत्नखचितं सिंहासनमेकमस्ति । स च सुवर्णस्तम्भः प्रागुदयति विभावसौ पृथिव्या निर्गत्य, गगनमध्य-

मध्यारूढे स्वयमपि सन्निधत्ते; अस्तमुपगच्छति च तस्मिन् क्रमेणावतीर्य स्वयं गङ्गाप्रवाहे निमज्जति। प्रतिदिनमेवं तत्र भवति। एतन्महाश्चर्यं मया दृष्टम्।"

राजा विक्रमोऽपि तच्छ्रुत्वा तेन सह तत् स्थानं गतो रात्रौ सुखं सुष्वाप। प्रभातायां च शर्वर्यां गङ्गाप्रवाहाद्वरसिंहासनयुक्तो हेमस्तम्भो मन्दं मन्दं निरगमत्। तस्मिन् स्तम्भे राजा स्वयमुपाविशत्। स्तम्भोऽपि यावत् सूर्यमण्डलसमीपमगमत्, तावदग्निकणसमुद्गारिभिः सूर्यकिरणैरदह्यत राज्ञः शरीरम्। ततो राजा मांसपिण्डीभूतेनैव शरीरेण सूर्यमण्डलं प्राप्यास्तावीत्।

नमः सवित्रे जगदेकचक्षुषे जगत्प्रसूतिस्थितिनाशहेतवे।
त्रयीमयाय त्रिगुणात्मधारिणे विरिञ्चिनारायणशङ्करात्मने॥

इति बहुधा स्तुत्वा परमात्मानमर्यमणं नमश्चकार। ततः सूर्यस्तममृतेनासिञ्चत्। ततो राज्ञः शरीरं भूयोऽप्यवर्धत। राजाऽवदत्—'धन्योऽहमस्मि।' सूर्यः—'भो राजन्, त्वं महासत्त्वाधिकोऽसि एतन्मम मण्डलं दुष्प्रापमन्यैरुपागतः। तदहं सन्नोऽस्मि। वरं वृणीष्व।' राज्ञोक्तम्—'भो देव, किमतः परमधिको वरोऽस्ति। महामुनीनामप्यलभ्यं तव संदर्शनं यदहमभजम्। तव प्रसादान्मम सर्वमप्यर्थजातं निरपायं विद्यते।' तद्वचनेनातिसंतुष्टो भगवान् विभावसुः स्वकीये रत्नकुण्डले दत्त्वा 'भो राजन्! एतत्कुण्डलद्वयं प्रतिदिनमेकैकं सुवर्णभारं प्रयच्छति।' इत्युक्त्वा प्रेषयामास।

ततो राजा कुण्डलद्वयं गृहीत्वा पुनर्नमस्कृत्य तस्मात् स्वर्ण-स्तम्भादवतीर्य यावदुज्जयिनीमाजगाम, तावत् कश्चिद्ब्राह्मणो मार्गे समागत्य—

वेदान्तेषु यमाहुरेकपुरुषं व्याप्य स्थितं रोदसी
यस्मिन्नीश्वर इत्यनन्यविषयश्शब्दो यथार्थाक्षरः ।
अन्तर्यश्च मुमुक्षुभिर्नियमितप्राणादिभिर्मृग्यते
स स्थाणुः स्थिरभक्तियोगसुलभो निश्श्रेयसायास्तु वः ॥ २२२॥

इत्याशिषं कृत्वाऽभणत् 'भो राजन्, अहं कुटुम्बी ब्राह्मणः, परं दरिद्रः । सर्वत्र भिक्षाटनं करोमि । तथाऽप्युदरं न पूर्यते । तच्छ्रुत्वा राजा तस्मै कुण्डलद्वयं दत्त्वाऽवदत्—'एतत् प्रतिदिन-मेकैकं सुवर्णभारं दास्यति ।' इति राज्ञो वचनं श्रुत्वा ब्राह्मणः संतुष्टो राजानं बहुशः स्तुत्वा निजालयमगमत् । राजाऽप्युज्जयिनीं प्रत्यागच्छत् ।

इमां कथां कथयन्त्यां सालभञ्जिकायां भोजस्तूष्णीमासीत् ।

इत्यष्टादशोपाख्यानम्.

## अथैकोनविंशोपाख्यानम् ॥

राज वराहमनुधाव्य बिलं प्रविश्य
दृष्ट्वा बलिं समधिगम्य च तत्सपर्याम् ।
दत्तं रसायनमवाप्य रसं च विप्रा-
यादादिति प्रतिमया विनिवेद्यतेऽद्य ॥ २२३॥

पुनरपि राजानं भोजं सिंहासनसमारुरुक्षासमाकुलितहृदयमपरा सालभञ्जिका निवार्य जगाद ।

महीपाल ! श्रूयताम् । विक्रमे रत्नाकरमेखलामिमां शासति सर्वेऽपि लोकाः परमानन्दपरिपूर्णहृदयाः समभूवन् । ब्राह्मणाः षट्कर्मनिरताः। स्त्रियः पतिव्रताः। शतायुषः पुरुषाः। वृक्षाः सदा फलकुसुमभरिताश्चासन् । पर्जन्यः काले वर्षति स्म । मही सर्वदोर्वराऽदृश्यत ।लोकानां भूतेषु दया, पापभीतिः, अतिथिसत्कारः, गुरुसेवा सत्पात्रे दानं च प्रावर्तन्त । तत एकदा विक्रमार्कः सिंहासनमध्यासामास । तत्र सभायामुपविष्टाः सुमनसः शास्त्राणि विचारयामासुः । वन्दिनो विविधापदानानि पेठुः । मल्लाः पुनः स्वभुजबलमदर्शयन् । सवयसो राजकुमारा नखाङ्कुरसमुल्लासितश्मश्रवोऽन्योन्यं हसन्तः शरणागतपरिपालनप्रतिज्ञाप्रावीण्यमुद्गिरन्तः, केचनामुष्मिकप्रीतिमाविष्कुर्वन्तः, केचन धर्मसंग्रहप्राभवमुद्भावयन्तो राजानमसेवन्त । तदा कश्चिन्मृगवधाजीवः समागत्य राजानं प्रणम्य सप्रश्रयं व्यजिज्ञपत्—'अरण्यमध्ये कश्चिदञ्जनाचलसंकाशो महान् वराहः कतिपयैर्दिवसैः परिभ्रमति । वनैकवसतेरस्यापि जनस्याश्रुतपूर्वोऽयमीदृशो जन्तुः, किं पुनरदृष्टचर इति । तदेष देवस्य दृष्टिपथमवतरितुमर्हति । तदुपरि देवः प्रमाण'मिति विरराम ।

तच्छ्रुत्वा राजा तदैव राजकुमारैः सह वनं विवेश । प्रविश्य च नदीतटे कुत्रापि निकुञ्जान्तरे शयानं सूकरमपश्यत् । ततः स वराहो मृगयूनां कोलाहलं श्रुत्वा घुर्घुरारवमुखरं निर्जगाम । ततः सर्वेऽपि राजकुमारा अहमहमिकया स्वहस्तकौशलानि दर्शयन्तः

सर्वायुधानि चिक्षिपुः । स च तान्यगणयन् पश्यतामेव शूरमानिनां किमपि पर्वतकन्दरं विवेश । राजाऽपि तं पृष्ठतोऽनुधावन् बहिरश्वं निबध्य स्वयमपि बिलं प्रविवेश । महत्यन्धकारे सुदूरं गत्वा महान्तं प्रकाशमपश्यत् । ततः किञ्चिदिवातिक्रम्य नगरमेकं सुवर्णप्राकारमभ्रङ्कषप्रासादोपशोभितं देवतायतनैरुपवनैरलंकृतं समस्तवस्तुसंपूर्णविपणिरमणीयं धनिकलोकसमाकुलं नानाविलासिनीजनसंसेव्यमानमतिमनोहरमपश्यत् । अथ कथमपि प्रविश्य विपणिमध्ये गच्छन्नतिमनोहरं हरशिखरिसहोदरं राजभवनमपश्यत् । तत्र विरोचनसुतो बली राज्यं कुर्वन्नास्त । राजाऽपि सभां प्रविश्य सिंहासनोपविष्टेन बलिना झडिति समालिङ्गितोऽतिरमणीये भद्रासने समुपवेशितः । अनन्तरं बलीराजानमप्राक्षीत्—'सखे ! कुत्र ते निवासः ? कानि तव नामाक्षराणि ? कथमिव दुरवगाहमिमं देशं प्रविष्टोऽसि ? ।' राजा—'विक्रमनामानं मामाहुः । उज्जयिनी मे निवासः । भवत्संदर्शनार्थं कमपि वराहमनुसरन् कथमपि समागतोऽस्मि ।' बलिः—'धन्योऽस्मि । अद्यैव सफलाः संवृत्ता मे मनोरथाः ।' विक्रमः—'भो राजन्, त्वं पवित्रभूतान्तः करणः; तवैव जीवितं श्लाघ्यम्; यतः साक्षाद्वैकुण्ठभवनो नारायणस्तव मार्गणतामालम्बे ।' बलिः—'यदि भवान्मे मित्रं, तर्हि मदीयं किमपि वस्तु परिगृहाण ।' विक्रमः—'भवदनुग्रहादहमपि पूर्णकामोऽस्मि ।' बलिः—सखे, मैवम् । एतदेव हि बन्धुलक्षणम् ।

दहाति प्रतिगृह्णाति गुह्यमाख्याति पृच्छति ।
भुङ्क्ते च भोजयत्येव षड्विधं बन्धुलक्षणम् ॥

तथा च—

पापान्निवारयति योजयते हितानि
गुह्यं निगूहति गुणान् प्रकटीकरोति ।
आपद्गतं च न जहाति ददाति काले
सन्मित्रलक्षणमिति प्रवदन्ति सन्तः ॥ २२५॥

किञ्च—

नोपकारं विना प्रीतिः कस्यापि भुवि जायते ।
उपयान्ति च दानेन यतो देवा अभीष्टदाः ॥ २२६॥

तथाच च—

तावत् प्रीतिर्भवेल्लोके यावद्दानं प्रदीयते ।
वत्सः क्षीरक्षयं दृष्ट्वा स्वयं त्यजति मातरम् ॥ २२७॥

अन्यच्च—

पुत्रादपि प्रियतरं नियमेन दानं
मन्ये पशोरपि विवेकविवर्जितस्य ।
दत्ते तृणे तु निखिलं खलु येन दुग्धं
नित्यं ददाति महिषी विनिवर्त्य वत्सम् ॥ २२८॥

एवं भणित्वा विक्रमाय राज्ञे रसं रसायनं च ददौ ।

ततो राजनि तस्मादनुज्ञां प्राप्य बिलान्निर्गत्याश्वमारुह्य निजपुरं प्रत्यागत्य राजमार्गे समागच्छति, महादुर्गतिपीडितः सपुत्रः कश्चिद्ब्राह्मणः समागत्य स्तुत्वाभाणीत्—'भो राजन्, परमहं दरिद्रः । अद्य सकुटुम्बस्य मम किमपि भोजनपर्याप्तं धनं देहि, महत्या

बुभुक्षया समाकुलाः स्मः ।' तदा राजा—'भो ब्राह्मण, इदानीं मम हस्ते किमपि धनं नास्ति । परं तु रसो रसायनं चेति वस्तुद्वयमस्ति । अनेन रसेन संपर्के सति सप्त धातवः सुवर्णानि भवन्ति । इदं रसायनं यस्तु सेवते, स जरामरणवर्जितो भविष्यति । उभयोरेकं गृहाण ।' तदा ब्राह्मणः—'येन पुमान् जरामरणवर्जितो भविष्यति । तद्दीयताम् ।' तदा तस्य पुत्रः प्राह—किं क्रियते तातेन रसायनेन ? जरामरणवर्जितेनापि पुनर्दारिद्र्यमेवानुभवितव्यम् । येन संपर्के सति धातुः सुवर्णं भवति , स एव रसो ग्राह्यः' इत्युभयोर्विवादो राजसमक्षमेव समभूत् । ततो राजा उभयोर्विवादं दृष्ट्वा रसं रसायनं च ताभ्यां ददौ तौ राजानं स्तुत्वा निजालयं जग्मतुः । राजाऽपि निजनिवासमाजगाम '।

इमां कथां कथयित्वा सालभञ्जिका भोजराजमब्रवीत्—'भो राजन्, किमद्य मन्यसे ?' तच्छ्रुत्वा राजा तूष्णीं बभूव ।

इत्येकोनविंशोपाख्यानम्.

## अथ त्रिंशोपाख्यानम् ॥

सदण्डकन्थां खटिकां मुनेस्तु गृहीतराज्याय विपक्षभूपैः ।
दिदेश राजन्यकुमारकाय राजेति सैषा प्रतिमाभिधत्ते ॥

पुनरपि राजा सिंहासनमारुरोह । तावदन्या सालभञ्जिकाऽक्षिप्य जगाद—' भो राजन् , विक्रमस्यौदार्यादिगुणा यस्य सन्ति, सोऽस्मिन् सिंहासन उपविशतु ।' राजा—' कथय तस्यौदार्यादिवृत्तान्तम् ।' सावदत्—राजन् , श्रूयताम् ।

विक्रमो राजा षण्मासान् राज्यं कृत्वा षण्मासान् देशान्तरं परिभ्रमन्नास्त । एवमेकदा नानादेशान् परिभ्रम्य पद्मालयं नाम नगरमगमत् । तन्नगराद्बहिस्स्थितोद्यानवने मनोहरं विमलोदकं च सरोवरं दृष्ट्वा तत्रोदकं पीत्वा कुत्रापि तरुतले सुखमुपविवेश । तत्रान्ये केचन वैदेशिकाः समागत्य जलपानं विधायोपविश्य परस्परं गोष्ठीमकुर्वन्त—'अहो ! अस्माभिर्बहवो देशा दृष्टाः, बहूनि तीर्थानि सेवितानि, अतिदुर्गमाः पर्वताः समारूढाः; परमेकत्रापि महापुरुषदर्शनं नाभूत् ।'

तेष्वेकः—'कथं महापुरुषदर्शनं भविष्यति ? यत्र महापुरुषो वर्तेत तदतीव दुर्गममेव भवेत् । बहवो मध्ये विघ्नाः समापतन्ति । देहस्यापि नाशो भवति । यत्र च शरीरमेव नश्येत्, सोऽयमुद्यमः कतमाय फलाय ? प्रथममात्मैव रक्षणीयो बुद्धिमता पुरुषेण ।

उक्तञ्च—

आपदर्थं धनं रक्षेद्दारान् रक्षेद्धनैरपि ।
आत्मानं सर्वदा रक्षेद्दारैरपि धनैरपि ॥ २३०॥

तस्मात् सर्वत एवात्मानं गोपायेत् । अन्यच्च, सर्वधर्माणां शरीरमेव प्रथमं साधनम् । तथा हि—

अपि क्रियार्थं सुलभं समित्कुशं ?
जलान्यपि स्नानविधिक्षमाणि ते ?
अपि स्वशक्त्या तु तपः प्रवर्तते ?
शरीरमाद्यं खलु धर्मसाधनम् ॥ २३१॥

तथा च—

पुनर्जाया पुनर्वित्तं पुनः क्षेत्रं पुनस्सुताः ।
पुनः शुभाशुभं कर्म शरीरं न पुनः पुनः ॥ २३२॥

तस्मान्मनीषी साहसं न कुर्वीत । तथा चोक्तम्—

अफलानि दुरन्तानि समव्ययफलानि च ।
अशक्यानि च कार्याणि नारभेत विचक्षणः ॥ २३३॥

किञ्च—

पर्वतं विषमं घोरं बहुव्याघ्रसमाकुलं ।
नारोहति नरः प्राप्तसंशयो हि कदाचन ॥ २३४॥

यत्कार्यं पुरुषेण क्रियते तद्विचार्यैव कर्तव्यम् । यत्र च फलं नास्ति, स्वल्पं च यत्र फलं भवति, तस्मिन् कार्ये शरीरस्यैव नाशो भविष्यतीति तत्र कुर्यात् । ”

राजापि तस्य वचनं श्रुत्वा सन्निधायावदत्—“ वैदेशिकाः, किमेवमुच्यते ? यावत् पुरुषेण पौरुषं साहसं च न क्रियेत, तावत् सर्वमपि दुर्लभम् । उक्तञ्च—

वस्तूनि दुर्लभान्यपि लभ्यन्ते वाञ्छितानि साहसिकैः ।
सञ्जीविन्यमृताद्या हनुमद्गरुडादिभिर्हृता हि खलु ॥ २३५॥

विशति कदाचिद्गगनं खातात् पातालतोऽपि जलमेति ।
दैवमचिन्त्यं बलवद्बलवानिह गण्य एव पौरुषवान् ॥ २३६॥

अक्लेशतः सुखानि न लभ्यन्ते । तथा च—

दुरधिगमः परभागो यावत् पुरुषेण पौरुषं न कृतम् ।
हरति तुलामधिरूढो भास्वानुद्यन् हि जलदपटलानि ॥ २३७॥

ततस्तद्राजवचनं श्रुत्वा वैदेशिका अपृच्छन्—'भो महासत्व, तर्हि किं कार्यं कथय' राजा—'महापुरुषदर्शनमेव कर्तव्यम्। अस्मान्नगराद्द्वादशयोजनपर्यन्तं यदि गम्यते, तत्र महारण्यमध्ये विषमः कश्चित् पर्वतोस्ति। तदुपरि त्रिकालनाथो नाम योगी विद्यते। स तु सेवितो वाञ्छितार्थं दास्यति। अहं तत्र गमिष्यामि।' वैदेशिकाः—'तर्हि वयमपि तत्रागमिष्यामः' राजा—'सुखमागम्यताम्।' ततस्ते राज्ञा सह निर्गत्य महदरण्यमतिविषमं दृष्ट्वा राजानमूचुः—'भो महासत्व, कियद्दूरे पर्वतोस्ति?' राजा—इतोऽष्टौ योजनानि विद्यन्ते।' वैदेशिकाः—'तर्हि वयं नागमिष्यामः, महद्दूरमस्ति। मार्गोऽप्यतिविषम इव दृश्यते।' राजा—"वैदेशिकाः, व्यवसायिनां किन्नाम दूरम्?

नात्युच्चं शिखरं मेरोर्नातिनीचं रसातलम्।
व्यवसायप्रसक्तानां नातिपारो महोदधिः॥ २३८॥

कोऽतिभारः समर्थानां कः परः प्रियवादिनाम्।
को विदेशः सविद्यानां किं दूरं व्यवसायिनाम्?॥ २३९॥

पुनरपि कतिपियोजनानि कथमप्यतीत्य पुरतो महाकराळवदनं विषाग्निमुद्वमन्तमतिभयङ्करं सर्पं मार्गमावृत्य स्थितमद्राक्षुः। ते तु तं दृष्ट्वा भयात् पलायाम्बभूवुः। राजा पुनरपि गन्तुं प्रावर्तत। ततः स सर्पः समागत्य राजानं परिवेष्ट्यादशत्। ततस्तेन वेष्टितो विषवेगान्मूर्छन्नप्यतिदुर्गमं तं पर्वतमारुह्य योगिनं त्रिकालनाथं दृष्ट्वा नमश्चकार। योगिसन्दर्शनमात्रेण सर्पस्तं मुक्त्वाऽपससार। राजाऽपि निर्विषो बभूव। योगी—'भो महासत्त्व, महाप्रसादभूयिष्ठ-

मेतदमानुषं स्थानमतिक्लेशेन किमर्थमागतोऽसि ?' राजा—'भोः स्वामिन्, अहं भवत्सन्दर्शनार्थमेव समागतोऽस्मि । 'योगी—'तर्हि महाकष्टमनुभूतं त्वया ।' राजा—"किमपि कष्टं नास्ति । भवत्सन्दर्शनमात्रेण सकलमपि कल्मषं नामशेषमभूत् । कष्टं तु कियत् ? अद्याहं धन्योऽस्मि' यतो महतां सन्दर्शनमतिदुर्लभमभजम् । किं च, यावदिदं शरीरं दृढं, यावदिन्द्रियाणि स्वस्थानि, पुरुषेण पुण्येन तावददात्महितमनुष्ठेयम् । तथाचोक्तम्—

यावत् स्वस्थमिदं शरीरमरुजं यावज्जरा दूरतो
यावच्चेन्द्रियशक्तिरप्रतिहता यावत् क्षयो नायुषः ।
आत्मश्रेयसि तावदेव विदुषा कार्यः प्रयत्नो महान्
सन्दीप्ते भवने तु कूपखननं प्रत्युद्यमः कीदृशः । ? ॥ २४०॥

ततः प्रसन्नो योगी राज्ञे खटिकां योगदण्डं कन्थां च दत्त्वाऽब्रवीत्—"भो राजन् ' अनया खटिकया भूमौ यावत्यो रेखा लिख्यन्ते तावन्ति योजनान्येकस्मिन् क्षणे गन्तुं शक्यते । अमुना योगदण्डेन दक्षिणहस्तविधृतेन स्पृश्यते यदि मृतं सैन्यं सजीवं भूत्वोत्तिष्ठति; वामहस्ते धृत्वा वैरिसैन्यं दृश्यते यदि तदा सर्वमपि तन्नश्येत् । इयं कन्था पुनरीप्सितं वस्तु ददाति । "राजा ततस्तानि गृहीत्वा योगिनं नमस्कृत्यानुज्ञां लब्ध्वा प्रत्याजगाम । तावन्मार्गे कश्चिद्राजकुमारोऽभ्यग्नि वर्तमानः काष्ठसञ्चयेन तं वधेयम् पतनोन्मुख इवादृश्यत । राजा तमपृच्छत्— 'भोः सौम्य, किमेतत् क्रियते ? कुमारः—' अहं कस्यचिद्राज्ञः कुमारः । मम राज्यं दायादैरपहृतम् । दरिद्रोऽहं जीवितं धारयितुमसहमानोऽग्नि

प्रवेष्टुं काष्ठानि सञ्चिनोमि।' तच्छ्रुत्वा राजा तस्याभयं दत्वा खटिकां योगदण्डं कन्थां च दत्वा तेषां गुणानकथयत्। तदनन्तरं सन्तुष्टचित्तो राजकुमारो राजानं प्रणम्य स्वदेशमगमत्। राजा विक्रमोऽप्युज्जयिनीनगरमगमत्।

इमां कथां कथयित्वा सालभञ्जिका राजानमवदत्—'भो राजन्, त्वय्येवमौदार्यं धैर्यं परोपकाराश्च यदि विद्यन्ते, तर्ह्यस्मिन् सिंहासन उपविश।' तच्छ्रुत्वा राजा तूष्णीमपससार।

इति विंशोपाख्यानम् ॥

---

## ॥ अथैकविंशोपाख्यानम् ॥

अनानर्गळनाम्ना कथितं तप्तोदकं सरः प्राप्य।
अमरीदत्ताः सिद्धीर्विप्रायाष्टौ ददाविति ब्रूते ॥ २४१॥

भूयोऽप्येकदा भोजराजः सिंहासनसमारोहणसमुचितवेषः समागत्य पाञ्चालिकया निवारितस्तामाह—'कथय तस्यौदार्यवृत्तान्तम्।' साऽब्रवीत्, श्रूयतां राजन्।

विक्रमे राज्यं कुर्वति बुद्धिसिन्धुर्नाम तस्य मन्त्री समभवत्। तस्य पुत्रोऽनर्गळः। स घृतोदनं भुक्त्वा कुमारवृत्त्या कालमनयत्—कमपि विद्याभ्यासं नाकरोत्, एकदा पिता तमवादीत्—

भो अनर्गळ, त्वं ममोदराज्जातोऽसि। परं दुर्विधेयो विद्याभ्यासं न करोषि, मूर्खस्तिष्ठसि। शृणु,

अपुत्रस्य गृहं शून्यं देशः शून्यो ह्यबान्धवः ।
मूर्खस्य हृदयं शून्यं सर्वशून्या दरिद्रता ॥ २४२॥

ममाऽपि कोऽप्यर्थस्त्वत्तो नास्ति । तथा चोक्तम्—

कोऽर्थः पुत्रेण जातेन यो न विद्वान् न धार्मिकः ? ।
तया गवा किं क्रियते या न दोग्ध्री न गर्भिणी ? ॥ २४३॥

तथा च—

वरं गर्भस्रावो वरमृतुषु नैवाभिगमनं
वरं जातः प्रेतो वरमपि च कन्यैव जनिता ।
वरं वन्ध्या भार्या वरमगृहवासे निवसनं
न चेद्विद्वान् कश्चिद्द्रविणमदयुक्तोऽपि तनयः ॥ २४४॥

एतच्छ्रुत्वा स पश्चात्तापसंतप्तोऽनर्गळो वैराग्यं प्राप्य देशान्तरं जगाम । तस्मिन् देशान्तरे कस्यचिदुपाध्यायस्य सकाशात् सकलशास्त्राणि महतां कालेन पठित्वा निजनगरं प्रत्यागच्छन्, मार्गे मध्येऽरण्यं कमपि देवालयमपश्यत् । देवालयसमीपे पद्मषण्डमण्डितं चक्रवाकमिथुनालंकृतमतिविमलोदकं सरोवरमासीत् । तत्सरोवरैकदेशेऽतिसंतप्तमुदकमदृश्यत । एतत् सर्वं पश्यन् तत्रोपविवेश । ततः सूर्योऽस्तमगमत् । तदनन्तरमर्धरात्रसमये तप्तोदकमध्यादष्ट दिव्यस्त्रियो निर्जग्मुः । ता देवालयं गत्वा देवस्यावाहनादीन् षोडशोपचरान् कृत्वा नृत्तगीतादिभिर्देवमतोषयन् । ततो देवः प्रसन्नो भूत्वा ताभ्यः प्रसादमदात् । एतत् सर्वमप्यनर्गळः पश्यन् प्रभातसमये निर्गमनवेळायां ताभिर्व्यलोकि । तासामेका जगाद 'भोः सौम्य,

एह्यस्मन्नगरं गमिष्यामः ।' सोऽपि बाढमिति तया सह गच्छन् तप्तोदकमध्यप्रविष्टासु तासु भयादपसृत्य स्वनगरमागत्य पितृप्रमुखान् सर्वान् बन्धूनपश्यत् । परेद्यूराजदर्शनार्थं गत्वा राजानं प्रणम्योपविवेश । राजा सकुतूहलमपृच्छत्—'भो अनर्गळैतावन्ति दिनानि कुत्र गतोऽसि ?' अनर्गळः—'विद्याभ्यासार्थं देशान्तरं गतोऽस्मि ।' राजा—'तस्मिन् देशे किं किमपूर्वं दृष्टम् ?' अनर्गळेन तप्तोदकवृत्तान्तोऽभ्यधायि ।

तच्छ्रुत्वा राजा तेन सह तत्स्थानं गतवान् । ततः सूर्योऽस्तं जगाम । तत्रार्धरात्रसमये ता दिव्यस्त्रियस्तस्मात् सरोवरतप्तोदकमध्यान्निर्गत्य देवसमीपं गत्वा पूजां विधाय नृत्तगीतादिना देवमुपस्थाय प्रभाते न्यवर्तन्त । तावत् तासां मध्ये काचिदङ्गना राजानं दृष्ट्वा समवदत्—'भोः सौम्य, एहि मम नगरं गच्छामः ।' तच्छ्रुत्वा राजा ता अनुससार । ताः सर्वास्तप्तोदकमध्ये प्रविष्टाः सत्यः पाताळे निजनगरं जग्मुः । राजापि तप्तोदकमध्ये मग्नः सन् सहैव ताभिर्जगाम । ततस्तास्तं दृष्ट्वा तव सेवां करिष्याम इत्यूचुः । राजा—'किं मदन्यो राजा नास्ति ? ममापि राज्यमस्ति । अहमेतत् कुतूहलं द्रष्टुं समागतोऽस्मि ।' कन्याः—'भो महासत्त्व ! वयं प्रसन्नाः ; वरं वृणीष्व । राजा—'भवत्यः काः?' कन्याः—'वयं महासिद्धयः' राजा—'तर्हि मह्यमष्टौ सिद्धीर्दिशत ।' ततो राज्ञे ता अष्टौ रत्नानि ददुः । तान्यष्टसिद्धियुक्तानि रत्नानि गृहीत्वा तप्तोदकान्निर्गत्य स्वनगरमाजगाम ।

तावन्मार्गे कश्चिद्ब्राह्मणः समागत्य,—

'उत्पन्नो नाभिकमले हरेर्यश्चतुराननः ।
स पातु सततं युष्मान् वेदानामर्थपारगः ॥' २४५॥

इत्याशिषं कृत्वा प्राह—

शूरः सुरूपः सुभगः सुदृक् च शास्ता च शास्त्रार्थविदां वरिष्ठः ।
अर्थं विना नैव कलाकलापं प्राप्नोति मर्त्योऽत्र मनुष्यलोके ॥

किंच—

तानीन्द्रियाण्यविकलानि तदेव नाम
सा बुद्धिरप्रतिहता वचनं तदेव ।
अर्थोष्मणा विरहितः पुरुषः क्षणेन
सोऽप्यन्य एव भवतीति विचित्रमेतत् ॥ २४७॥

इत्युक्त्वा 'राजन्नहं महादारिद्र्यपीडितो बहुपुत्रपौत्रादिकुटुम्बः संसारं परित्यज्य गङ्गाप्रवेशं करिष्यामीति निर्गतोऽस्मि । अतस्तत्रभवता मम दारिद्र्यनिवारणं कर्तव्यम् ।' इत्यवदत् । राजा तद्वचनं श्रुत्वा तस्य तान्यष्टरत्नानि ददौ । स विप्रो राजानं स्तुत्वा तानि रत्नानि गृहीत्वा स्वपुरं जगाम । राजाप्युज्जयिनीमगमत् ।

इमां कथां कथयित्वा सालभञ्जिका राजानमब्रवीत्—'भो राजन्, त्वयीदृशमौदार्यं धैर्यं च विद्येते चेत्, तर्ह्यस्मिन् सिंहासन उपविश ।' तच्छ्रुत्वा राजा तूष्णीमगमत् ।

इत्येकविंशोपाख्यानम् ॥

## ॥ अथ द्वाविंशोपाख्यानम् ॥

अत्र हि नीलमहीध्रे कामाक्षीमन्दिरे बिलात् सहसा ।
उद्धृत्य तु रसकुम्भं द्विजातये दत्तवानिति ब्रूते ॥ २४८॥

भूयोऽपि धारानगरीधूर्वहे विश्वम्भराधिनाथे समागते पाञ्चालिकान्याब्रवीत्—भो राजन्, श्रूयताम्—

विक्रमादित्यो राज्यं कुर्वन्नेकदा पृथ्वीपर्यटनार्थं निर्गत्य नानादेवालयतीर्थपर्वतादिकं दृष्ट्वा कदाचिन्महारत्नमयप्राकारपरिवृतमभ्रंलिहप्रासादोपशोभितमनेकहरिहरालयपवित्रितं नगरमेकमपश्यत् । तत्र नगरोपान्तगं नारायणालयं गत्वा तत्र सरोवरे स्नात्वा देवं नमस्कृत्य तुष्टाव ।

मया ज्ञातं जगन्नाथ मौनमेव जगत्स्थले ।
को जानाति परं ब्रह्म हरिं वाचामगोचरम् ॥ २४९॥

नान्यं वदामि न शृणोमि न चिन्तयामि
नान्यं स्मरामि न भजामि न चाश्रयामि ।
मुक्त्वा त्वदीयचरणाम्बुजमादरेण
श्रीश्रीनिवास पुरुषोत्तम देहि दास्यम् ॥ २५०॥

करचरणकृतं वा कर्म वाक्कायजं वा
श्रवणनयनजं वा मानसं वापराधम् ।
विहितमविहितं वा सर्वमेतत् क्षमेथा
जय जय करुणाब्धे श्रीपते श्रीमुकुन्द ॥ २५१॥

एवमादि बहुधा स्तुत्वा रङ्गमण्टपे विशश्राम ।

तत्र कश्चिद्ब्राह्मणः समागत्य राजसमीपे समुपविवेश। तदान्वे राजावदत्—'भो ब्राह्मण, कुतस्त्यो भवान्?' ब्राह्मणः—'अहं कश्चित् तीर्थयात्रां करोमि। भवान् कुतः समागतः?' राजा—'अहं भवादृशः कश्चित् तीर्थयात्रापरायणः।' ब्राह्मणः सम्यग्राजानमवलोक्यापृच्छत्—"को भवानतितेजस्वी दृश्यते? त्वयि राजलक्षणानि सर्वाणि दृश्यन्ते। त्वं राजसिंहासनमर्हसि। पुनः पृथिवीं पर्यटसि। अथ वा ललाटलिखितं को वा लङ्घयति?

त्रिलोकेशः शार्ङ्गी शबरशरलक्ष्यत्वमगमत्
विधाता लोकानामलभत शिरः कृन्तनविधिम्।
प्रयातौ तौ राहोर्दिनकरशशाङ्कौ कबळतां
प्रभुर्नग्नः शम्भुः शिरसि लिखितं लङ्घयति कः॥ २५२॥

किंच—

हरिणापि हरेणापि ब्रह्मणापि सुरैरपि।
ललाटलिखिता रेखा परिमार्ष्टुं न शक्यते॥ २५३॥

तद्वचनं श्रुत्वा राजाप्यङ्गीचकार। उक्तं च-

युक्तियुक्तमुपादेयं वचनं बालकादपि।
विदुषामपि तत् त्याज्यमयुक्तं पद्मजन्मनः॥ २५४॥

राजा—'भो ब्राह्मण, किमर्थमतिश्रान्त इव दृश्यसे?' ब्राह्मणः—'श्रमकारणं कथयामि। कष्टमतीव प्राप्तोऽस्मि।' राजाऽवदत्—'कथ्यतां तस्य कष्टस्य कारणम्।' ब्राह्मणः—"भो राजन्, श्रूयताम्। इतो नातिदूरे नीलो नाम पर्वतोऽस्ति। तत्र किञ्चित्

पाताळबिलमस्ति । तन्मध्ये कामाक्षी नाम देवता वसति । मध्ये च तस्य कश्चिद्रसकुम्भो दृश्यते । तेन च रसेन धातवः सुवर्णतां यान्ति द्वादश वर्षाणि कामाक्षीमन्त्रजपमकरवम् । मया बिलद्वारं नोद्घाट्यते । तेनातिदुःखितोऽस्मि । ” राजाब्रवीत्—‘तत्स्थानं मम दर्शय । कोऽप्युपायः क्रियते । ’

ततस्तेन राज्ञे तत्स्थानं दर्शितम् । ततस्तस्यामेव रात्रौ राज्ञः स्वप्ने देवता समागत्य जगाद—‘राजन् त्वं किमर्थमागतोऽसि ? अत्र द्वात्रिंशल्लक्षणयुक्तस्य पुरुषस्य कण्ठरक्तसेचनं विना बिलद्वारं नोद्घाट्यते । ’ एतद्देवतावचनं श्रुत्वा राजा प्रबुध्य बिलद्वारसमीपं गत्वा निजकण्ठं छेत्तुमुपचक्रमे । तावद्देवता—भो राजन्, साहस-प्रिय, तवाहं प्रसन्नास्मि । वरं वृणीष्व । ’ राजा—‘देवि यदि प्रसन्नासि, तर्ह्यस्मै ब्राह्मणाय रसकुम्भं प्रयच्छ । देवतापि बाढमिति बिलाद्द्वारमुद्घाट्य ब्राह्मणाय रसकुम्भं ददौ । सोपि राजानं स्तुत्वा निजस्थानं जगाम । राजापि निजनगरमगमत् ।

इमां कथां कथयित्वा सालभञ्जिका राजानमब्रवीत् । ‘भो राजन, त्वय्येवमौदार्यं साहसं परोपकारश्च विद्यन्ते चेत्, तर्ह्य-स्मिन सिंहासने समुपविश । तच्छ्रुत्वा राजा तूष्णीं गतः ।

इति द्वाविंशोपाख्यानम् ॥

---

## अथ त्रयोविंशोपाख्यानम् ॥

एष हि विक्रमभूपो दुस्स्वप्नालोकनोपशमनाय ।
निजकोशं त्रीणि दिनान्यकरोज्जनस्सादिति ब्रूते ॥ २५५॥

पुनरपि राजा यावत् सिंहासनमारोढुमाजगाम, तावदन्या सालभञ्जिकाभणत्—भो राजन्, तव सिंहासनसमारुरुक्षा गरीयसी दृश्यते। इदं पुनरासनं विक्रमादित्यसदृशमेव क्षमेत। शृणु तस्य राज्ञो गुणान्।

एकदा विक्रमो महीं परिभ्रमन् निजनगरमागच्छत्। तदा नगरवासिनः सर्वे परमानन्दमवापुः। राजापि स्वशुद्धान्तं प्रविश्य मध्याह्नसमये सुगन्धितैलाक्तः स्नात्वानन्तरं वस्त्राभरणादिभिरलंकृतः सन् देवमर्चयित्वा,

'त्वमेव माता च पिता त्वमेव त्वमेव बन्धुश्च गुरुस्त्वमेव।
त्वमेव विद्या द्रविणं त्वमेव त्वमेव सर्वं मम देवदेव॥ २५६॥

नमो नमः कारणकारणाय नारायणायामितविक्रमाय।
श्रीशार्ङ्गचक्रासिगदाधराय नमो नमस्ते पुरुषोत्तमाय॥ २५७॥

इति देवं स्तुत्वा नमस्कृत्य गोभूतिलादिनानाविधनित्यदानानि निर्वर्त्य दीनान्धबधिरकुब्जपङ्ग्वादिभ्यो भूरि दत्त्वा भोजनगृहं प्रविश्य बालसुवासिनीवृद्धादीन् भोजयित्वा स्वयमन्यैर्बन्धुभिः साकमभ्यवजहार। साधु चेदम्—

बालान् सुवासिनीर्वृद्धान् गर्भिण्यातुरकन्यकाः।
संभोज्यातिथिवृद्धांश्च दम्पत्योः शेषभोजनम्॥ २५८॥

अन्यच्च—

एक एव न भुञ्जीत यदीच्छेद्वृद्धिमात्मनः।
द्वित्रैस्तु बन्धुभिः साकं भोजनं कारयेन्नरः॥ २५९॥

अभीष्टफलसंसिद्धिरिष्टकार्यार्थसंपदः ।
द्वितैस्तु बन्धुभिः साकं भोजनेन प्रजायते ॥ २६०॥

ततः कञ्चित् कालं कतिपयानि पदानि परिक्रम्योपविवेश । उक्तं च—

भुक्त्योपविशतो मन्दं भुक्त्वा संविशतः सुखम् ।
आयुष्यं क्रममाणस्य मृत्युर्धावति धावतः ॥ २६१॥

अत्यम्बुपानादतिसंगमाच्च दिवा च सुप्तेर्निशि जागराच्च ।
निरोधनान्मूत्रपुरीषयोश्च षड्भिर्निदानैः प्रभवन्ति रोगाः ॥

अथ राजनि समानवयोविद्यैः प्रियमित्रैर्गोष्ठीं कुर्वति, क्रमेण भगवान्मरीचिमाली चरमगिरिशिखरमवततार। अथ राजा समुत्थाय सायन्तनं कर्मकलापं निर्वर्त्य भुक्त्वा शयनगृहं प्रविश्य तत्र शशिकरनिकरप्रभाभासुरपटपरिस्तीर्णे सुरभिकुसुमविसराकीर्णे विचित्रतरोल्लोचसमुल्लासिते पर्यङ्के सुखं सुष्वाप। प्रभातसमये स्वप्ने स्वयमात्मानं महिषमारुह्य दक्षिणां दिशं गच्छन्तं दृष्ट्वा सहसा प्रबुद्धो विष्णुं स्मरन् समुत्थाय संध्यादि कर्म समनुष्ठाय सिंहासने समुपविष्टो ब्राह्मणानां पुरतः स्वप्नवृत्तान्तमकथयत्।

तच्छ्रुत्वा सर्वज्ञभट्टनामा प्राह—"भो राजन्, स्वप्नास्तु द्विविधाः। केचन शुभाः शुभफलं प्रयच्छन्ति; केचनाशुभा अशुभफलं प्रयच्छन्ति । तत्र शुभाः—

आरोहणं गोवृषकुञ्जराणां प्रासादशैलाग्रवनस्पतीनाम् ।
विष्ठानुलेपो रुदितं नितान्तं शुभान्यगम्यागमनं तथैव ॥२६३॥

अशुभाश्च—

आरोहणं कण्टकवृक्षवाहवैर्युष्ट्रकाणामथ दर्शनानि ।
कार्पासतीव्रोरगपोत्रिशाखामृगादिमानामशुभानि लोके ॥ २६४॥
खरोष्ट्रमहिषव्याघ्रान् स्वप्ने यस्त्वधिरोहति ।
षण्मासाभ्यन्तरे तस्य मृत्युर्भवति निश्चयात् ॥ २६५॥

फलकालश्च—

स्वप्नस्तु प्रथमे यामे वत्सरेण विपाकभाक् ।
द्वितीये चाष्टभिर्मासैस्त्रिभिर्मासैस्तृतीयके ॥ २६६॥
अरुणोदयवेळयां सद्यः स्वप्नफलं भवेत् ।
गोविसर्जनवेळायां सद्यः स्वप्नफलं भवेत् ॥ २६७॥

किं बहुना ? भो राजन्नयं दुस्स्वप्नः । तवारिष्टकारी । ”

राजा—‘भो ब्राह्मण, अस्य दुस्स्वप्नस्य प्रायश्चित्तं किं करवाणि ? सर्वज्ञभट्टः—“स्नात्वा वस्त्राद्यलंकृतः सन्नाज्यावेक्षणं कृत्वा तद्वस्त्रादिकं ब्राह्मणाय देहि । पुनर्नववस्त्रादिकं धृत्वा देवस्याभिषेकं कारयित्वा नवरत्नैः संपूज्य ब्राह्मणेभ्यो गवादिदशदानानि देहि । दीनांधबधिरपङ्ग्वादिभ्यो भूरि प्रयच्छ । अनेनानुष्ठानेन ब्राह्मणाशीर्वादेन च दुस्स्वप्नजातारिष्टफलं नश्यति । ” राजाप्येतत् सर्वज्ञभट्टवचनं श्रुत्वा यथोक्तमनुष्ठाय भूरिदानार्थं दिनत्रयं भण्डारं मुक्तवान् । यथाभिलषितं सर्वे जह्रुः ।

इति कथां कथयित्वा सालभञ्जिका राजानमब्रवीत्—‘भो राजन् , त्वय्येवमौदार्यं किं विद्यते ?’ तच्छ्रुत्वा राजा तूष्णीं जगाम।

इति त्रयोविंशोपाख्यानम् ॥

## ॥ अथ चतुर्विंशोपाख्यानम् ॥

पुरन्दरपुरीवणिक्तनुजदायभागक्रमं
निशम्य धुरि तत्कृता सह विगृह्य युद्धे जितः ।
उपास्य पथि वासुकिं त्वमृतकुम्भमादाय तं
ददौ द्विजनुषे मुदेत्यभिदधाति पाञ्चालिका । २६८॥

पुनरपि भोजभूपालमागतमाक्षिप्यान्या सालभञ्जिकाब्रवीत्- 'भो राजन्नेतत् सिंहासनं समारोढुं विक्रमार्कसदृश एव क्षमः। राजा—'भोः साळभञ्जिके, कथय तस्य गुणान् ।' साब्रवीत् । 'राजन्नाकर्ण्यताम्—विक्रमादित्यस्य राज्ये पुरन्दरपुरी नाम काचन नगरी समभूत् । तत्र महाधनिकः कश्चिद्वणिगासीत् । तस्य चत्वारः पुत्राः समभूवन् । ततो महति काले गच्छत्यतिवृद्धः स वैश्यो मरण-समये चतुरः पुत्रानाहूयावादीत् 'भोः पुत्राः, मयि परेते भवतां मैत्री सुतरां भवति वा न वा । पश्चाद्विवादो भविष्यति । तदहं जीवन्नेव भवतां चतुर्णां ज्येष्ठक्रमेण विभागं करवाणी'ति । तथा च कृत्वोवाच अस्य मञ्चस्य चतुर्णां पादानामधश्चत्वारो भागानिक्षि-प्ताः । तान् ज्येष्ठक्रमेण गृह्णीध्वम् । पुत्रा बाढमित्यङ्गीचक्रुः । तत-स्तस्मिन् परलोकं गते चत्वारो भ्रातरो मासमेकत्र तस्थुः । ततस्ते-षां स्त्रीणां कलहः शनैरुदियाय । तदनन्तरं ज्यायानुवाच—'किमर्थं कोलाहलः क्रियते ? तातपादैश्चतुर्णां विभागः प्रागेव कृतः । तन्म-ञ्चाधस्स्थितं द्रव्यं गृहीत्वा विभक्ता एव सुखिनस्तिष्ठामः ।' तथेति सर्वेऽप्यूरीकृत्य मञ्चस्याधश्चख्नुः । तावच्चतुर्णां पादानां तळे चत्वारि ताम्रसंपुटान्यदृश्यन्त । तेषामेकत्र संपुटे मृत्, एकत्राङ्गारः, अन्य-

त्रास्थीनि, परत्र पलालश्चासीत् । एतच्चतुष्टयं दृष्ट्वा ते चत्वारः परस्परं विस्मिताः प्रोचुः । अहो! अस्मत्पित्रा सम्यगेव कृतो विभागः । किमत्र निदानमिति न ज्ञायते ।' इति विचार्य राजसभां प्रविश्य निवेदयामासुः । तच्छ्रुत्वा सभ्या निर्णेतुं न शेकुः । पुनस्ते प्रतिनगरमेत्य प्राज्ञेभ्यो न्यवेदयन् । परमेकोऽपि निर्णेता न निश्चक्राम ।

अनन्तरमुज्जयिनीं समागता राजसभामागत्य वृत्तान्तमकथयन् । ततो राज्ञा च विभागक्रमो न ज्ञायते स्म । तदनन्तरमेकदा प्रतिष्ठाननगरमागतास्तत्रत्येभ्यो जनेभ्यो जगदुः । तैरपि निर्णयो न कृतः । तस्मिन् समये कुम्भकारगृहे स्थितः शालिवाहनोऽमुं वृत्तान्तमाकर्ण्य तत्रागत्य ब्राह्मणान् महाजनानेवं भणति स्म— 'भोः सौम्याः, किमत्र दुर्बोधमस्ति? केनायं विभागक्रमो न ज्ञायते—भवद्भिः?' तेऽवदन् 'कुमार, अस्माभिर्नावबुध्यते । यदि जानासि, कथय कथमयं विभागक्रम इति ।' तदा शालिवाहनः— "एते चत्वार एकस्यैव पुत्राः । जीवन्नेवैतेषां पिता ज्येष्ठकनिष्ठानुक्रमेण विभागं कृतवान् । यतो ज्येष्ठस्य मृत्तिका दत्ता, तेन या समुपार्जिता भूमिः सर्वा सा तस्मै दत्तेति ज्ञायताम् । द्वितीयस्य पलालो दत्तः, तेन सर्वमपि धान्यं दत्तम् । तृतीयस्याङ्गारो दत्तः, तेन सर्वमपि सुवर्णं दत्तम् । चतुर्थस्यास्थीनि दत्तानि, तेन सर्वाणि गोधनानि दत्तानि ।" इति शालिवाहनेन तेषां विभागक्रमनिर्णयः कृतः । तेऽपि सन्तुष्टाः स्वनगरं जग्मुः ।

राजा विक्रमोऽपीमां विभागनिर्णयवार्तां श्रुत्वातिविस्मयं गतः प्रतिष्ठाननगरमहाजनान् प्रति पत्रिकां प्रेषयामास । तथा हि

" स्वस्ति श्रीयजनयाजनाध्ययनाध्यापनदानप्रतिग्रहषट्कर्मनिरतान् यमनियमादिगुणगरिष्ठान् प्रतिष्ठाननगरवासिनो महाजनान् कुशलप्रश्नप्रशंसापूर्वकं राजा विक्रमो वदति—भवन्नगरे चतुर्णां वणिक्पुत्राणां विभागनिर्णयो येन कृतः। सोऽस्मदन्तिकं प्रेषयितव्य इति।" एवं महाजना राज्ञा प्रेषितां पत्रिकां वाचयित्वा शालिवाहनं तमाहूयावादिषुः—"शालिवाहन, राजाधिराजः श्रीवीरप्रतापशाली प्रत्यर्थिपृथ्वीनाथनमस्कृतचरणसहस्रपत्रः श्रीविक्रमादित्यमहाराज उज्जयिनीनगरवतंसः सकलार्थिलोककल्पवृक्षस्त्वां समाह्वयति। त्वं तत्र गच्छ।" शालिवाहनः—'विक्रमो नाम राजा कियान्? तेनाहमाहूतो न गच्छामि। यदि तस्य प्रयोजनमस्ति, स्वयमेवागच्छतु। मम तदन्तिके किमपि फलं नास्ति।' तस्य वचनं श्रुत्वा महाजनाः स नायातीति पुनः पत्रिकां लिखित्वा कमपि दूतं प्रैषयन्। ततो राजा पत्रिकां गृहीत्वा क्रोधानलेन देदीप्यमानविग्रहोऽष्टादशाक्षौहिणीबलेन निर्गत्य प्रतिष्ठाननगरमागत्य शालिवाहनाय दूतं प्रैषयत्। ततो दूतः समागत्य शालिवाहनं दृष्ट्वावादीत्—'भोः शालिवाहन, सकलराजाधिराजो विक्रमादित्यस्त्वां समाह्वयति। तस्य संदर्शनार्थमागच्छ, शालिवाहनः—'रे नाहमेकाकी राजानं द्रक्ष्यामि। चतुरङ्गबलसमेतः सन् समराङ्गणे विक्रमं पश्येयम्। एवं राज्ञे निवेदय।' तस्य वचनं श्रुत्वा दूतो राज्ञे निवेदयामास। तच्छ्रुत्वा विक्रमो युद्धाय सङ्गररङ्गमाजगाम।

शालिवाहनोऽपि कुम्भकारगृहे मृण्मयं हस्त्यश्वरथपादातं मन्त्रेण समुज्जीव्य तेन बलेन नगरान्निर्गत्य समराङ्गणमवजगाहे। तदात्वे,

दिक्चक्रं चलितं भयाज्जलनिधिर्जातो भृशं व्याकुलः
पाताळे चकितो भुजङ्गमपतिः पृथ्वीधराः कम्पिताः ।
भ्रान्ता सा पृथिवी महाविषधराः क्ष्वेळं वमन्त्युत्कटं
एवं वृत्तमभूज्जगज्जनपतेः सर्वं चमूनिर्गमे ॥ २६५॥

तथा च-

पवनमतिगतीनां वाजिनां भूरिवृन्दै-
र्घननिभगजयूथा राजते वीरसेना ।
रथरुचिरपताकाप्रावृतं खं समस्तं
पटहपटुनिनादैः भज्यते स्म त्रिलोकी ॥ २६६॥

अश्वाङ्घ्र्युत्थितरेणुभिर्बहुतरैर्व्याप्तं त्वशेषं नभः
शस्त्रैरावृतमन्तराळमखिलं व्याप्ता विशाला धरा ।
निर्घोषै रथजैस्ततः प्रतिहता वाक्चापि न श्रूयते
वीराणां निनदैः प्रभूतभयदैर्युक्ता प्रसन्ना चमूः ॥ २६७॥

अनन्तरमुभयोः सैन्ययोः सङ्कुलं युद्धं समभूत् । ततो विक्रमार्केण शालिवाहनसैन्यं सर्वमपि निपातितम् । शालिवाहनोऽप्यतिविह्वलः सन् 'आपत्काले मां स्मर' इति पितृदत्तं वरं स्मृत्वा शेषं नागेन्द्रं पितरं सस्मार । शेषोऽपि सर्वान् सर्पान् प्रेषयामास । तैराशीविषैर्दष्टमात्रं विक्रमस्य सैन्यं निखिलं निपपात ।

तदनन्तरं विक्रमो राजा स्वयमेकाकी निवृत्य स्वसैन्यसमुज्जीवनार्थं तीर्थोदके वर्षमेकं वासुकिं प्रति व्रतमन्वतिष्ठत् । ततो वासुकिः प्रसन्नो भूत्वा बभाषे—'भो राजन्, वरं वृणीष्व' इति ।

राजा—'भोः सर्पराज, यदि प्रसन्नोऽसि, तर्हि भुजङ्गविषवेगेन मूर्छितं मम सैन्यं सञ्जीवय।' तथेति वासुकिरमृतघटमेकमदात्। तममृतघटं गृहीत्वा राजा विक्रमः सत्वरमाजगाम। तावद्ब्राह्मणः कश्चित् समागत्य—

'हरेर्लीलावराहस्य दंष्ट्रादण्डः स पातु वः।
हेमाद्रिः कलशो यत्र धात्रीच्छत्रश्रियं दधौ ॥' २६८॥

इत्याशिषमुक्तवान्। राजा—'भो ब्राह्मण, कुतः समागतोऽसि?' ब्राह्मणः—'अहं प्रतिष्ठाननगरादागच्छम्।' राजा—'यत् त्वया याच्यते तदहं दास्यामि।' ब्राह्मणः—'भवानर्थिजनचिन्तामणिः, यतश्चिन्तितं वस्तु दातुं प्रभवसि। अतो ममैतस्मिन् वस्तुनि महती प्रीतिरस्ति; तद्दीयतामयममृतकुम्भः।' राजा—'त्वं केन प्रेषितोऽसि?' ब्राह्मणः—'अहं शालिवाहनेन प्रेषितोऽस्मि।' ततो राजा विचारयामास—मया पूर्वमस्मै दास्यामीत्युक्तम्; इदानीं न दीयते चेदपकीर्तिरधर्मोऽपि स्यात्; अतः सर्वथा दातव्यमेव।' ब्राह्मणः—"राजन्, किं विचार्यते? भवान् सज्जनः। सज्जनस्तु द्विर्न भाषते। तथाचोक्तम्—

उदयति यदि भानुः पश्चिमे दिग्विभागे
प्रचलति यदि मेरुः शीततां याति वह्निः।
विकसति यदि पद्मं पर्वताग्रे शिलायां
भवति तदनृतं वै भाषितं सज्जनानाम् ॥ २६९॥

तथा च—

अद्यापि नोज्झति हरः किल कालकूटं
कूर्मो बिभर्ति धरणीं खलु पृष्ठभागे ।
अम्भोनिधिर्वहति दुस्सहबाडवाग्नि-
मङ्गीकृतं सुकृतिनः परिपालयन्ति ॥" २७०॥

राजा 'सत्यमाह भवान् । गृह्यताममृतघटोऽय' मिति तस्मै ददौ । सोऽपि राजानं स्तुत्वा निजस्थानं गतः । राजाऽप्युज्जयिनीमगात् ।

इमां कथां कथयित्वा सालभञ्जिका तमवोचत्—भो राजन्, यदि क्षममात्मानं मन्यसे, तर्ह्युपविश ।' तच्छ्रुत्वा राजा तूष्णीं बभूव ।

इति चतुर्विंशोपाख्यानम् ॥

---

## ॥ अथ पञ्चविंशोपाख्यानम् ॥

द्वादशवार्षिकमधिकावग्रहं भाविनं समाकर्ण्य ।
आशापूरण्यै निजशिरो बलिं दत्तवानिति ब्रूते ॥ २७१॥

पुनरपि राजा यावत् सिंहासन उपवेष्टुमुपाक्रमत, तावदन्या सालभञ्जिकाऽब्रवीत् । श्रूयतां राजन्—

विक्रमादित्ये राज्यं कुर्वत्येकदा कश्चिज्ज्यौतिषिक आगत्य—

सूर्यः शौर्यमथेन्दुरिन्द्रपदवीं सन्मङ्गळं मङ्गळः
सद्बुद्धिं च बुधो गुरुश्च गुरुतां शुक्रः शुभं शं शनिः ।

राहुर्बाहुबलं करोतु सततं केतुः कुलस्योन्नतिं
नित्यं भूतिकरा भवन्तु भवतः सर्वेऽनुकूला ग्रहाः ॥ २७२॥

इत्याशिषमुक्त्वा पञ्चाङ्गमकथयत् । राजा पञ्चाङ्गं श्रुत्वा ज्यौतिषिकमपृच्छत् । 'भो दैवज्ञ, कीदृशमेतत्संवत्सरफलम् ?' दैवज्ञः—अस्मिन् संवत्सरे राजा रविः, मन्त्री मङ्गळः, धान्याधिपतिः शनिः । अन्यच्च, शनैश्चरो भौमश्च रोहिणीशकटं भित्वा यास्यतः । तस्मात् सर्वथाऽनावृष्टिर्भविष्यति । उक्तं च वराहमिहिरेण—

अर्कसुतेन हि भग्ने भौमः शुक्रश्च रोहिणीशकटे ।
द्वादश चाब्दान् न हि न हि वर्षति वर्षाणि वारिदो नियतम् ॥
रोहिणीशकटमर्कसूनुना भिद्यते रुधिरवाहिनी सरित् ।
किं ब्रवीमि ? न हि वारि सागरे सर्वलोक उपयाति संक्षयम् ॥

मतान्तरे—

यदा भिनत्ति मन्दोऽयं रोहिण्याः शकटं तदा ।
वर्षाणि द्वादशात्यन्तं वारिवाहो न वर्षति ॥" २७५॥

इदं दैवज्ञवचनं श्रुत्वा राजाऽब्रवीत्—'एतदवग्रहनिवारणे कमप्युपायं निवेदय ।' दैवज्ञः—'नवग्रहहोमाद्यनुष्ठानं कर्तव्यम् । ततो वृष्टिर्भविष्यति ।'

ततो विक्रमार्कः श्रोत्रियान् ब्राह्मणानाहूय तेभ्यः पूर्ववृत्तान्तमुक्त्वा तैर्होमं कारयितुमुपक्रान्तवान् । ततः सर्वा होमसामग्री संपादिता । ब्राह्मणैः कल्पोक्तप्रकारेण नवग्रहहवनमपि कृतम् । होमसाद्गुण्यार्थं पूर्णाहुतिरपि निर्वर्तिता । राजा दिव्यवस्त्रादिना ब्राह्मणा-

नतोषयत् । ततो भूरिदानेन दीनान्धबधिरपङ्गुकुब्जादयोऽपि सन्तोषिताः । तथाऽपि वृष्टिर्नाभूत् । तदनन्तरमनावृष्ट्या सर्वोऽपि लोकः परं क्लेशमगमत् । राजाऽपि तेषां दुःखेन स्वयं दुःखितः सन्नेकदा यज्ञशालायामुपविष्टो व्यचिन्तयत् । तावदशरीरिणी वागासीत्—"भो राजन्, तव परोपकारो यदि, पुरस्थितदेवालयवासिन्या आशापूरण्या देवतायाः पुरो द्वात्रिंशल्लक्षणयुक्तस्य पुरुषस्य कण्ठरक्तेन बलिं देहि । ततो वृष्टिर्भविष्यति, अवग्रहोऽपि नश्यति ।" इति श्रुत्वा राजा देवालयं गत्वा देवतां नमस्कृत्य कण्ठे खड्गं न्यधात् । तावद्देवता—'राजन, तव धैर्येण प्रसन्नास्मि । वरं वृणीष्व ।' राजाऽभणत्—'देवि, अनावृष्टिं निवारय ।' देवता 'तथा करिष्यामि' इत्युक्त्वा सद्यश्चकार । ततो राजा निजभवनमगमत् ।

इमां कथां कथयित्वा सालभञ्जिका भोजराजमब्रवीत्—'भो राजन्, एवंविधं साहसं त्वयि विद्यते चेदस्मिन् सिंहासन उपविश ।' तच्छ्रुत्वा राजा तूष्णीं बभूव ।

इति पञ्चविंशोपाख्यानम् ॥

---

## ॥ अथ षड्विंशोपाख्यानम् ॥

परोपकारित्वपरीक्षणाय स्वाराण्णियुक्तां बहुपङ्कमग्नाम् ।
उद्धृत्य राजा सुरभिं द्विजाय ददाविति व्याहरतीह सैषा ॥

पुनरपि राजा यावत् सिंहासने समुपवेष्टुमयतिष्ट, तावदन्या सालभञ्जिकावदत्—'भो राजन्नत्र सिंहासने स्थित्वा राज्यं कर्तुं विक्रम एव प्रभवति।' राजा—'सालभञ्जिके, कथय तस्य महिमानम्।' साब्रवीत्—भो राजन्, निशम्यताम्।

विक्रमादित्यसदृशो राजाऽन्यः सत्त्वौदार्यादिगुणैर्नास्ति। अन्यच्च, यदुक्तं तदन्यथा स न करोति। यच्चित्ते तिष्ठति तदेव वदति। यद्वाचा वदति तदेव करोति। अतः सज्जनो विक्रमार्कः।

यथा चित्तं तथा वाक्च यथा वाक्च तथा क्रिया।
चित्ते वाचि क्रियायां च साधूनामेकरूपता॥ २७७॥

तथा च—

उपकर्तुं प्रियं वक्तुं कर्तुं स्नेहमकृत्रिमम्।
सज्जनानां स्वभावोऽयं यथेन्दोः शिशिरो गुणः॥ २७८॥

अथैकदा सुरनगर्यां सिंहासनमलंचकार भगवान् सहस्राक्षः। तदा च तमष्टादश सहस्राणि महर्षयः, त्रयस्त्रिंशत् कोटयो देवा, अष्टौ लोकपाला, एकोनपञ्चाशन्मरुद्गणाः, द्वादशादित्या, श्चन्द्राङ्गारकादयो ग्रहाः, नारदादयो देवर्षयो, मेनकोर्वशीतिलोत्तमासुकेशीघृताचीमञ्जुघोषाप्रियदर्शिनीप्रभृतयो दिव्याङ्गनाः, सर्वे गन्धर्वादयो गणाश्चासेवन्त। अत्रान्तरे नारदः—'भूमण्डले विक्रमसदृशः परोपकारी महासत्त्वसंपन्नो वा राजा कोऽपि नास्ति।' तद्वचनमाकर्ण्य सर्वापि सभा परं विस्मयं जगाम। कामधेनुः—"कोऽत्र संदेहः? न किमप्यत्र विस्मयनीयम्।

दाने तपसि कार्ये च विज्ञाने विनये नये ।
विस्मयो हि न कर्तव्यो बहुरत्ना वसुन्धरा ॥ २७९॥

तथा च—

वाजिवानरलोहानां काष्ठपाषाणवाससाम् ।
नारीपुरुषतोयानामन्तरा महदन्तरम् ॥” २८०॥

तदनन्तरमिन्द्रः सुरभिमवादीत्—‘त्वं मर्त्यलोकं गत्वा विक्रमस्य परोपकारगुणान् निश्चित्य मम निवेदय ।’

अथ सुरभिर्विक्रमार्कस्य हृदयपरीक्षार्थं राजागमनमार्गे दुर्बला सती कुत्रापि घोरे पङ्के निममज्ज । राजापि तां दृष्ट्वा सहसा स्वरूपाभिमानमपहाय दुरवगाहे पङ्के प्रविश्य स्वयमेव तां पङ्कादाकृष्य प्रक्षाल्य शनैर्घासमुष्टिं दत्त्वा कण्डूयनादिभिरुपचचार । तदा कामधेनुर्निजरूपं धृत्वा प्रसन्ना भूत्वावदत्—‘भो राजन्, वरं वृणीष्व ।’ राजा—‘यदि मम सुप्रसन्नासि, तर्हि निजरूपेण मम गृहे सर्वदा निवसतु भवती ।’ तथेत्युक्त्वा सा सुरभी राज्ञो हस्तगताभूत् । तदा कश्चिद्ब्राह्मणः समागत्य,

‘सानन्दं नन्दिहस्ताहतमुरजरवाहूतकौमारबर्हि-
त्रासान्नासाग्ररन्ध्रं विशति फणिपतौ भोगसंकोचभाजि ।
गण्डोड्डीनालिमालामुखरितककुभस्ताण्डवे शूलपाणे-
र्वैनायक्यश्चिरं वो वदनविधुतयः पान्तु फीट्कारवत्यः’ ॥

इत्याशिषं प्रयुज्यावादीत्—

राजन् सर्वानहं याचे न मां कश्चन याचते ।
अहो दैवविपाकोऽयमीश्वराणामपीश्वरः ॥ २८२॥

यस्तु दारिद्र्यमुद्रितस्तस्य गृहे सर्वं शून्यं वर्तते । तथाहि—

ग्रासं मे पथिकाय देहि सुभगे हा हा गिरो निष्फलाः
कस्माद्ब्रूहि सखेऽस्ति नूतनमिदं कोवावधिर्नास्ति वै ।
यावज्जीवमिदं स जातिरपरा वित्तप्रभावादियं
को जातो मम सर्ववित्तहरणो दारिद्र्यनामा सुतः ॥ २८३॥

राज्ञोक्तम्—'भो ब्राह्मण, किं याच्यते त्वया?' ब्राह्मणः—'भवानाश्रितकल्पवृक्षः । यावज्जीवं मम दारिद्र्यदुःखं मास्तु।' राजा—'इयं कामधेनुस्तवेप्सितं दास्यति । इमां गृहाण' इति तस्मै कामधेनुं ददौ । ब्राह्मणस्तां गृहीत्वा निजभवनमयासीत् । राजापि निजनगरमगमत् ।

इमां कथां कथयित्वा सालभञ्जिका राजानमवदत्—'किं तथा दातुं प्रभवसि?' तच्छ्रुत्वा राजा तूष्णीमगच्छत् ।

इति षड्विंशोपाख्यानम् ॥

---

## अथ सप्तविंशोपाख्यानम् ॥

आत्मकण्ठरुधिरेण भैरवं तोषयन् वसुमयं घटत्रयम् ।
देवदत्तकितवाय दत्तवानित्यसौ भणति सालभञ्जिका ॥ २८४॥

पुनरप्येकदा भोजे महीपतौ सिंहासनमारोढुं समागच्छति, तावदन्या सालभञ्जिका निराचकार, व्याजहार च; राजन् श्रूयताम्—

विक्रमार्को राजा पृथ्वीं शासन्नेकदा धरापर्यटनार्थं निजनगरान्निर्गत्य नगरमेकमगमत् । तत्रत्या राजानः परं धार्मिकाः श्रुतिस्मृतिविहितानुष्ठानतत्पराः, चातुर्वर्ण्यं साधु पर्यपालयन् । सर्वे जनाः सदाचारा अतिथिप्रिया दयापराश्चासन् । राजा विक्रमस्तत्र पञ्च दिनानि स्थास्यामीति कश्चिदतिमनोहरं देवालयं गत्वा देवं नमस्कृत्य रङ्गमण्टपमध्यास्त । अत्रान्तरे कश्चिद्राजकुमार इवातिमनोहररूपो दुकूलवस्त्रधारी नानालङ्करणालङ्कृतः कर्पूरकुङ्कुमागुरुमृगनाभिसुगन्धामिळितचन्दनानुलिप्ततनुर्गणिकाभिः साकं तत्रागत्य नानाविधाः क्रीडाकथा विधाय कञ्चित् कालमपनीय पुनरपि ताभिः सार्धं निर्जगाम । राजापि तं दृष्ट्वा कोऽयमिति विचारयन्नास्त । परेद्युः स एकाकी दीनवदनो वस्त्रादिरहितः कौपीनमात्रशेषः समागत्य रङ्गमण्टपे पपात । राजा तं दृष्ट्वा भणति स्म—'भोः पूर्वेद्युर्वस्त्राभरणादिनालङ्कृतशरीरो राजकुमार इव वेश्याभिः सह समागतोऽसि । अद्य पुनरेवं दृश्यसे । किमेतत् ?'

स पुरुषः—"भो महापुरुष, किमेवमुच्यते ? अहं पूर्वेद्युस्तथैव स्थितः । इदानीं दैवयोगादेवं तिष्ठामि । तथा हि—

ये वर्धिताः करिकपोलमदेन भृङ्गाः
प्रोत्फुल्लपङ्कजरजस्सुरभीकृताङ्गाः ।
ते सांप्रतं प्रतिदिनं गमयन्ति कालं
निम्बेषु चार्ककुसुमेषु च दैवयोगात् ॥ २८५॥

विकसितसहकारपुष्पवाटी-
परिमळकेळिपरायणो हि भृङ्गः ।

विलसति मधुतुन्दिलः पुरा यः
स विधिबलादधुनैति घाल्पवृक्षान ॥ २८६॥

ये वर्धिताः कनकपङ्कजकेसराग्रै-
र्मन्दाकिनीविमलतुङ्गतरङ्गसौधे ।
ते सांप्रतं प्रतिदिनं खलु राजहंसाः
शैवालजालजटिलं जलमाश्रयन्ते ॥ २८७॥

वातान्दोलितगाङ्गपङ्कजरजःपिङ्गाङ्गरागोज्ज्वलो
यः शृण्वन् कलकूजितं मधुलिहां सञ्जातहर्षोत्सवः ।
कान्ताचञ्चुपुटावलम्बितबिसग्रासग्रहेऽप्यक्षमः
सोऽयं संप्रति हंसको मरुगतः कष्टं तृणं मार्गते ॥ २८८॥

कर्मणा नियमिते जन्मनि; को वा कष्टं न प्राप्नोति ? तथा

ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे
विष्णुर्येन दशावतारगहने क्षिप्तो महासङ्कटे ।
रुद्रो येन कपालपाणिपुटके भिक्षाटनं सेवते
सूर्यो भ्राम्यति येन खेऽनवरतं तस्मै नमः कर्मणे ॥" २८९॥

राजा—'को भवान् ?' पुरुषः—'अहं कितवः ।' राजा–'त्वं द्यूतक्रीडां जानासि किम् ?' पुरुषः—"दुरोदरविषयेऽहमेव विचक्षणो, नान्यः । अन्यच्च, वारिक्रीडां वराटमुष्टिं च जानामि । परं दैवमेव बलवत् । उक्तञ्च—

"शशिदिवाकरयोर्ग्रहपीडनं गजभुजङ्गविहङ्गमबन्धनं ।
मतिमतां च समीक्ष्य दरिद्रतां विधिरहो बलवानिति मे मतिः ॥"

राजा—'भो देवदत्त, त्वमतीव प्राज्ञोऽसि। कथमेवं पापे द्यूतकर्मणीच्छां करोषि?' देवदत्तः—"प्राज्ञोऽपि पुरुषः कर्मणा प्रेर्यमाणः किं न कुर्यात्?

"किं किं न कुर्यात् प्राज्ञोऽपि प्रेर्यमाणः स्वकर्मभिः।
प्रागेव हि मनुष्याणां बुद्धिः कर्मानुसारिणी॥" २९१॥

राजा—द्यूतं पुनर्महापापमूलम्। सर्वेषां व्यसनानामाश्रयभूतो द्यूतविधिः। तथोक्तम्—

भवनमिदमकीर्तेश्चोरवेश्यादिसद्म
व्यसननिधिरुदग्रापन्निधिः पापबीजम्।
विषमनरकमार्गेष्वग्रयायी व मर्त्यः
क इह विशदबुद्धिर्द्यूतकार्यं करोति॥ २९२॥

तन्महापापानि सप्तव्यसनानि बुद्धिमता त्याज्यानि। उक्तञ्च—

द्यूतमांससुरावेश्याखेटचौर्यपराङ्गनाः।
महापापानि सप्तैव व्यसनानि त्यजेद्बुधः॥ २९३॥

अन्यच्च—यस्त्वेकव्यसनेन युक्तः, स तु नियमेन नश्यति। किं पुनः सप्तव्यसनाभिभूतः? उक्तञ्च—

द्यूताद्धर्मसुतः पलादिह बको मद्याद्यदोर्नन्दनाः
शक्रो जारतया मृगान्तकतया स ब्रह्मदत्तो नृपः।
चोरत्वाच्च ययातिरन्यवनितासङ्गाद्दशास्यो महा-
नेकैकव्यसनार्दिता यत इमे सर्वैर्न को नश्यति॥ २९४॥

ततस्त्वमप्येतानि सप्त व्यसनानि परित्यज । " देवदत्तः—'भोः स्वामिन्, ममैतदेव जीवनं, कथं परित्यजेयम्? यदि कृपां विधाय कमपि धनोपार्जनोपायं कथयिष्यसि, तदाहं दुरोदरं त्यजामि ।' अस्मिन्नवसरे विदेशवासिनौ द्वौ ब्राह्मणावागत्य देवालयैकदेशे समुपविष्टौ परस्परममन्त्रयेताम् । तत्रैकः—"मया पिशाचभाषालिपिमन्त्रकल्पोऽवलोकितः । तत्रैवं वर्णावलिर्दृश्यते—'अस्य देवालयस्येशान्यदिग्भागे पञ्चधनुः प्रमाणे श्वभ्रे नवरत्नादिपूरितं घटत्रयमस्ति । तत्समीपे भैरवप्रतिमास्ति । त्वं भैरवं स्वकण्ठरक्तेन सिक्त्वा तद्गृहाणे'ति ।" तदा राजा तद्वचनं श्रुत्वा तत्र गत्वा स्वकण्ठरक्तेन भैरवं यावत् सिषेच, तावत् प्रसन्नो भैरवो जगाद—'भो राजन्, प्रसन्नोऽस्मि । वरं वृणीष्व ।' राजा—'यदि मम प्रसन्नोऽसि तर्ह्यस्मै द्यूतकाराय नवरत्नपूरितं घटत्रयं देहि ।' ततो भैरवेण तद्धनं कितवाय दत्तम् । । द्यूतकारोऽपि राजानं स्तुत्वा निजस्थानं गतः । राजा विक्रमोऽपि निजनगरमगमत् ।

इति कथां कथयामास सालभञ्जिका । तच्छ्रुत्वा राजा तूष्णीं गतः ।

इति सप्तविंशोपाख्यानम् ॥

## ॥ अथाष्टाविंशोपाख्यानम् ॥

अत्र हि वेताळपुरे कश्चन चण्ड्या निवार्य बलिभावात् ।
तत्रापनुनोद नृणां तत्प्रथमं बलिविधानमिति वक्ति ॥ २९५॥

पुनरपि राजा कदाचन सिंहासनमधिरोढुकामः पाञ्चालिकामस्तके पादं निधातुमुपचक्रमे । तावदष्टाविंशतितमी प्रतिमा जगाद— यद्यपि भवान् महीं पालयति, तथापि विक्रमार्क इव भद्रासनमिदमधिरोढुं नार्हति । श्रूयताम् ।

विक्रमादित्यो राजा पृथिवीपर्यटनार्थमेकदा स्वनगरान्निर्गतो नगरमेकमगमत् । तन्नगरसमीपे निर्मलोदका कापि तरङ्गिणी प्रवहति । तत्तीरे नानाविधकुसुमफलभरितविटपिकुलसंकुलं वनमेकमपश्यत् । मध्ये च तस्य समुत्तुङ्गगोपुरवरणरमणीयं देवतायतनमद्राक्षीत् । दृष्ट्वा च तत्र नदीजलमवगाह्य तमालयमलंकुर्वाणं देवं प्रणम्य तत्रोपविवेश । तत्रान्तरे वैदेशिकाश्चत्वारः समागत्य राजसमीपे समुपविविशुः । ततो राजा तानप्राक्षीत्—'यूयं कुतः समागच्छथ? तत्र कश्चिदुवाच—'पूर्वदेशादागच्छामः ।' राजा—'तत्र किमद्भुतमपश्यत ?' ते प्रोचुः—'स्वामिन्, महदपूर्वं लोचनगोचरमकुर्म । यत् प्राणान् हस्ते गृहीत्वा वयमागच्छामः ।' राजा—'तत् किं कथयत ।' पुरुषाः—'तत्र देशे बेताळपुरी नाम वर्तते । तत्र शोणितप्रिया नाम देवतास्ति । तत्रत्या महाजना राजा च प्रतिसंवत्सरं स्वमनोरथपूरणार्थं तस्यै पुरुषोपहारं प्रयच्छन्ति । तस्मिन् दिने कोऽपि वैदेशिकः समायाति यदि, तमेव देवतायाः पुरः पशुमिव समर्पयन्ति । वयमपि तस्मिन्नेव दिने मार्गवशात् तन्नगरं प्राप्ताः । तत्रत्या अस्मानुपहर्तुमयतिषत । तां प्रवृत्तिं कर्णपरम्परया निशम्य वयं प्राणत्राणपरायणाः कथमपि पलायनमेव शरणं मन्वानाः समागताः स्मः । एतन्महदाश्चर्यमस्माभिर्दृष्टम् ।"

तच्छ्रुत्वा राजा विक्रमस्तत्र गत्वा देवतायतनमतिभयङ्करं विलोक्य देवतां नमस्कृत्यास्तावीत्—

ब्राह्मी वारिरुहेन्दुसौम्यवदना माहेश्वरी लीलया
कौमारी रिपुवर्गनाशनकरी चक्रायुधा वैष्णवी ।
वाराही घनघोरघर्घररवाऽप्यैन्द्री च वज्रायुधा
चामुण्डा गणनाथरुद्रसहिता रक्षन्तु मां मातरः ॥ २९६॥

इति स्तुत्वा तत्र रङ्गमण्टपमधिशिश्ये ।

तस्मिन् समये कश्चिद्दीनवदनो वैदेशिको महाजनैर्वाद्यपुरस्सरमनीयत । राजापि तं दृष्ट्वा स्वमनसि विचारयति स्म—अयमेव देवताबलिनिमित्तं महाजनैः समानीतः । ततोऽयं दीनवदनो दृश्यते । अस्मिन् समये मम शरीरं दत्त्वामुं मोचयिष्यामि । इदं शरीरं शतं वर्षाणि स्थित्वापि सर्वथा नाशमेव यास्यति । अतः स्वदेहव्ययेनापि धर्मं कीर्तिं च समार्जयिष्यामि । उक्तञ्च—

चला लक्ष्मीश्चलाः प्राणाश्चलो देहोऽपि यौवनं ।
चलं चलश्च संसारः कीर्तिर्धर्मश्च निश्चलौ ॥ २९७॥

अर्थाः पारदचञ्चला गिरिनदीवेगोपमं यौवनं
मानुष्यं जलवीचिबिन्दुचपलं फेनोपमं जीवितम् ।
धर्मं यो न करोति निश्चलमतिः स्वर्गार्गलोद्घाटनं
पश्चात्तापयुतो जरापरिगतः शोकाग्निना दह्यते ॥ २९८॥

एवं विचार्य राजा तान् महाजनानपृच्छत्—'अयं दीनवदनः कुत्र किमर्थं नीयते?' जनाः—'अमुं देवताबलिनिमित्तं नयामः ।'

राजा—'किं कारणम्?' जनाः—'देवतानेन पुरुषोपहारेण तुष्टा सत्यस्मन्मनोरथं पूरयिष्यति।' राजा—"भो महाजनाः अयमत्यन्तमल्पतनुः परं भीतश्च। अस्य शरीरोपहारेण देवतायाः का नाम तुष्टिर्भविष्यति? तस्मादमुं मुञ्चन्तु भवन्तः। अहमेव तदर्थं मम शरीरं दास्यामि। अहं पुष्टाङ्गोऽस्मि। मम मांसोपहारेण देवता संतुष्टा भविष्यति। अतो मां नयत।" इति भणित्वा राजा तं विमोच्य स्वयमेव देवतायाः समक्षं गत्वा स्वखड्गं कण्ठे चकार। तावद्देवता मण्डलाग्रमाकृष्य जगाद—'भो महासत्त्व, तवौदार्येण धैर्येण च संतुष्टास्मि। वरं वृणीष्व।' राजा—'देवि, यदि मम प्रसन्नासि, तद्द्यप्रभृति पुरुषमांसोपहारं परित्यज।' देवताप्यङ्गीचकार। तत्र महाजना राजानमवदन्—"महीपाल, त्वं निजसुखनिरभिलाषः सन् परार्थमेव परं खेदं वहसि महाद्रुम इव तथाहि—

स्वसुखनिरभिलाषः खिद्यसे लोकहेतोः
प्रतिदिनमथ वा ते वृत्तिरेवंविधैव।
अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णं
शमयति परितापं छायया स्वाश्रितानाम्॥" २९९॥

ततो राजापि तदनुज्ञां गृहीत्वा निजनगरमगमत्।

इमां कथां कथयित्वा सालभञ्जिका राजानमब्रवीत्—'धारानगरधुरन्धर, त्वय्येवमौदार्यं विद्यते?' तच्छ्रुत्वा राजा तूष्णीं बभूव।

इत्यष्टाविंशोपाख्यानम्॥

---

## अथैकोनत्रिंशोपाख्यानम् ॥

एष हि विक्रमभूपः कस्मैचिद्वन्दिने दरिद्राय ।
रत्नानि यावदिष्टं हर्तुं कोशं ददाविति ब्रूते ॥ ३००॥

भूयोऽपि समागतं भोजराजमपरा व्याजहार—नेदमधिष्ठातुमर्हति भवान् । श्रूयतां राजन्—

एकदा विक्रमार्को राजा राजन्यकुमारैः संसेव्यमानः सभायामुपविवेश । तदा कश्चन स्तुतिपाठकः समागत्य प्रणम्य,

"यावद्वीचीतरङ्गान् वहति सुरनदी जाह्नवी पुण्यतोया
यावच्चाकाशमार्गे तपति दिनकरो भास्करो लोकपालः ।
यावद्वज्रेन्द्रनीलस्फटिकमणिमयं विद्यते मेरुशृङ्गं
तावत् पुत्रैः सपौत्रैः स्वजनपरिवृतो भुङ्क्ष्व राज्यं नृपाल ॥

यथा तोयं समाकाङ्क्ष्य मयूरो ग्रीष्मपीडितः ।
निरीक्षतेऽथ जीमूतं तथाहं तव दर्शनम् ॥ ३०२॥

अहं तु हिमवन्निकटाद्भवतः कीर्तिं समाकर्ण्य दूरादागतोऽस्मि ।" इत्युक्त्वास्तावीत्—

कर्पूरादपि कैरवादपि दळत्कुन्दादपि स्वर्णदी-
कल्लोलादपि कैतकादपि गलत्कान्तादृगन्तादपि ।
दूरोन्मुक्तकळङ्कशङ्करशिरश्शीतांशुखण्डादपि
श्वेताभिस्तव कीर्तिभिर्धवळिता सप्तार्णवा मेदिनी ॥ ३०३॥

देवदेव तरुच्छायामाश्रितोऽस्मि महीपते ।
किं नाम खलु दैन्यं मे धन्यो नान्योऽस्ति मद्भुवि ॥ ३०४॥

देव सर्वस्वदातारं भवन्तं पश्यतो मम।
गाहते हृदयं भूपं तं वदान्यशिरोमणिम् ॥    ३०५॥

राजा—'कस्ते स्मरणवीथीमागतः?' वन्दी—देव, अस्त्युत्तरस्यां दिशि हिमवत्पर्वतोत्तरदिग्भागे जम्बीरनगरे धनेश्वरो नाम राजा। स तावदर्थिनां दारिद्र्यदुःखं निवार्य तान् धनपतीन् करोति। एकदा तेन धनेश्वरेण माघशुद्धसप्तम्यां वसन्तपूजा विहिता। तत्र दानार्थमष्टादशकोटिसुवर्णं परिकल्पितम्। एवमौदार्यगुणगरिष्ठः स राजा जागर्ति। अस्मिन् देशे देव एक एव तादृशो दृष्टः।" तस्य वचनं श्रुत्वा राजा भाण्डारिकमाहूयावादीत् 'अमुं वन्दिनं भण्डारं नीत्वा महार्हाणि रत्नानि दर्शय। ततोऽयं यावन्ति वाञ्छति तावन्ति रत्नानि गृह्णातु।' तथा कोशाध्यक्षस्तं भण्डारं नीत्वा दिव्यान्यनेकरत्नान्यदर्शयत्। स्तुतिपाठकोऽपि स्वेप्सितानि रत्नानि यथेष्टं गृहीत्वा परिपूर्णमनोरथो राजसमीपमागत्य भणति स्म—"भो देव, तव प्रसादादहं धनपतिर्जातोऽस्मि। नवापि निधयो मम हस्ते प्राप्ताइव। महाराज, हिरण्यगर्भादयोऽपि भवत्तुलां नाधिरोहन्ति। तथाहि—

वेधा वेदमयो विष्णुर्गोविन्दोऽपि गदाधरः।
शम्भुः शूली विषादी च देवः केनोपमीयताम् ॥    ३०६॥

इति स्तुत्वा ब्रह्मायुर्भवेत्याशिषमभिधाय निजनिवासमयासीत्।

इति कथां कथयित्वा सालभञ्जिका राजानमब्रवीत्। 'भो राजन्, किमाकर्णितमौदार्यं विक्रमार्कस्य?' राजा तूष्णीं बभूव।

इत्येकोनत्रिंशोपाख्यानम् ॥

## अथ त्रिंशोपाख्यानम् ॥

इन्द्रजालविदुषः प्रवीणतां भूमिजानिरवलोक्य विस्मितः ।
पाण्ड्यभूपतिसमर्पितं धनं दत्तवानिति हि वक्ति साम्प्रतम् ॥

अथ भूयोऽपि भद्रासनमधिरोढुमभिलषन्तमन्या सालभञ्जिकाऽभणत्—'महीपाल, विक्रमस्यौदार्यं त्वयि किं विद्यते?' राजा—'भोः सालभञ्जिके, कीदृशं यत् ?' साऽब्रवीत्, राजन्, श्रूयताम् ।

एकदा विक्रमः सकलसामन्तराजकुमारैरुपसेव्यमानः सिंहासनमध्यास्त । तत्र कश्चिदैन्द्रजालिकः समागत्य राजानं नमस्कृत्य जगाद—'देव, सकलकलाभिज्ञस्य तव समीपमागत्य बहव ऐन्द्रजालिका निजलाघवमदर्शयन् किल । मम तावदिदमेकं लाघवं तत्रभवान् प्रसन्नेन चेतसा विलोकयतु ।' राजा—'नेदानीमवसरोऽस्माकम् । स्नानसमयः सम्प्राप्तः । श्वः प्रभाते द्रक्ष्यामः ।' अथ परेद्युः प्रभाते राजा विक्रमस्तत्कालोचितं सर्वमनुष्ठानजातं विधाय प्रियबान्धवैः सह शरीरवृत्तिं निर्वर्त्य वस्त्राभरणगन्धमाल्याद्यैरलङ्कृतः सकलसामन्तमहीकान्तहितपुरोहितसेवितः सुधर्माभिधानं सभाभवनमवगाह्य तदिदममरपरिबृढप्रसादसमासादितमासनमास्थाय तमैन्द्रजालिकमाह्वाययत् । ऐन्द्रजालिको महाकायो महाश्मश्रुभिर्देदीप्यमानवदनो दक्षिणहस्ते खड्गं धृत्वा, अतिमनोहररूपलावण्यप्रेक्षणीयां कामपि कमललोचनां परिगृह्य, राजास्थानमण्टपं प्रविश्य, राजानं प्रणम्य तस्थौ । तदा सर्वेऽपि सामाजिकाः सविस्मयमद्राक्षुः, अप्राक्षुश्च । 'को भवान्? कुतस्त्यः?' इति । ऐन्द्रजालिकः—"अहं महेन्द्रसेवकः.

कदाचित् स्वामिना शप्तो भूमण्डले तिष्ठामि । इयं मम प्रेयसी । अद्य स्वर्गे देवानां पूर्वदेवानां च महद्युद्धं प्रवर्तते। अहं तत्र गच्छामि । अयं तु राजा विक्रमादित्यः परनारीसहोदर इत्यश्रौषम् । अतोऽहमस्य सविधे प्रियामिमां निक्षिप्य युद्धार्थं गमिष्यामि । " तच्छ्रुत्वा राजा विक्रमादित्यः परमाद्भुतभरितहृदयः कथमप्युररीकृतवान् । सोऽपि विक्रमहस्ते प्रणयिनीं समर्प्य तं प्रणम्य झडिति गगनमुदपतत् ।

तावदाकाशे, 'रे रे मारय घातये'ति घोरतरा वागभूत् । अथ सर्वेऽपि सभ्या युगपदुन्नमितवदनाः सकौतुकमपश्यन् । अनन्तरं मुहूर्तमात्रे राजसमक्षं दृढमुष्टिनिपीडितकृपाणो रुधिरधारारूषितो बाहुरेको दिवः पपात । राजा विलोक्य सभ्यानवादीत्—'महानयं वीरः संग्रामे प्रतिभटैर्न्यपाति । तस्यैकः सखड्गो बाहुरत्र पतितः ।' एवं वदत्येव राजनि कबन्धो न्यपतत् । समनन्तरमेव शिरोऽपि पतददृश्यत । तत् दृष्ट्वा सा वनिता सकरुणं जगाद—'भो देव, मम भर्ता रणाङ्गणे युद्धं विधाय शत्रुभिर्निहतः । तस्येदं शरीरं, सखड्गो बाहुः, शिरश्च । मम प्राणप्रियं यावदमर्यो न वृणते,तावदहं गमिष्यामि। ममाग्निर्दीयताम् । " एवं तस्या वचनं श्रुत्वा राजाब्रवीत्—'अयि पुत्रि, किमर्थमग्निं प्रवेक्ष्यसि ? त्वामहं तनयामिव परिपालयामि । रक्षात्मशरीरम् । '

वनिता—देव, किमभिधीयते! यदर्थमेतच्छरीरं, स मे स्वामी दशामिमामनुभवति । देव, तदेतच्छरीरं कस्य कृते रक्षामि । देवोऽ-

प्येवं मा वादीत् । यतः प्रमदाः पतिवर्त्मगा इति स्वतस्सिद्धोऽयं पन्थाः । तथा हि ।

शशिना सह याति कौमुदी सह मेघेन तटित् प्रलीयते।
प्रमदाः पतिवर्त्मगा इति प्रतिपन्नं हि विचेतनैरपि ॥ ३०८॥

तथा च स्मृतिः—

मृते भर्तरि या नारी समारोहेद्धुताशनम् ।
साऽरुन्धतीसमा भूत्वा स्वर्गलोके महीयते ॥ ३०९॥

यावच्चाग्नौ मृते पत्यौ भार्यात्मानं प्रदाहयेत् ।
तावन्मुञ्चति नो देहं स्त्री गरिष्ठा कथञ्चन ॥ ३१०॥

मातृकं पैतृकं चैव यत्र चैव प्रदीयते ।
कुलत्रयं पुनात्येषा भर्तारं यानुगच्छति ॥ ३११॥

तिस्रः कोट्योऽर्धकोटी च यानि रोमाणि मानवे ।
तावत्कालं वसेत् स्वर्गे भर्तारं यानुगच्छति ॥ ३१२॥

व्याळग्राही यथा व्याळं बिलादुद्धरते बलात् ।
तथा स्त्री पतिमुद्धृत्य सह तेनैव मोदते ॥ ३१३॥

दुर्वृत्तं वा सुवृत्तं वा सर्वपापरतं तथा ।
भर्तारं तारयत्येषा भार्या धर्मे सुनिष्ठिता ॥ ३१४॥

राजन्, पतिहीनाया जीवितेन किं प्रयोजनम्? उक्तञ्च—

दीनायाः पतिहीनायाः किं नार्या जीविते फलम् ।
श्मशानवटवत् तस्याः शरीरं निष्प्रयोजनम् ॥ ३१५॥

किं च ।

अपि बन्धुशतैर्नारी बहुपुत्रगणैर्युता ।
शोच्या भवति सा नारी पतिहीना तपस्विनी ॥ ३१६॥
गन्धैर्माल्यैस्तथा धूपैर्विविधैर्भूषणैरपि ।
वासोभिः शयनैश्चैव विधवा किं करिष्यति ॥ ३१७॥
नातन्त्री वाद्यते वीणा नाचक्रो याति वै रथः ।
नापतिः सुखमाप्नोति नारी बन्धुशतैरपि ॥ ३१८॥
मितं ददाति हि पिता मितं माता मितं सुतः ।
अमितस्य तु दातारं भर्तारं का न पूजयेत् ॥ ३१९॥
दरिद्रो व्यसनी वृद्धो व्याधितो विकलस्तथा ।
पतितः कृपणो वापि स्त्रीणां भर्ता परा गतिः ॥ ३२०॥
नास्ति भर्तृसमो बन्धुर्नास्ति भर्तृसमः सुहृत् ।
नास्ति भर्तृसमो नाथो नास्ति भर्तृसमः प्रियः ॥ ३२१॥
वैधव्यसदृशं दुःखं स्त्रीणामन्यन्न विद्यते ।
धन्या सा योषितां मध्ये म्रियते भर्तुरग्रतः ॥ ३२२॥

इत्येवमुक्त्वा सा हुताशनदानाय राज्ञः पादयोर्न्यपतत् । राजापि तस्याः पतिभक्तिपवित्रं वचः श्रवणसात् कृत्वा करुणारसार्द्रान्तःकरणः श्रीखण्डादिभिश्चितां विरचय्य तामन्वज्ञासीत् । सापि राज्ञः सकाशादनुज्ञां प्राप्य भर्तृशरीरेण सह पावकं प्राविक्षत् । ततः सूर्योऽपि संकुचितकरसहस्रश्चरमागिरिशिखरगह्वरमवागाहत । अथ राजापि सायन्तनं कर्मजातं निर्वर्त्य क्रमेण निशामनैषीत् ।

अथ प्रभातायां त्रियामायामुदयमहीधरशेखरायिततनौ तिग्मभानौ राजा सिंहासनोपविष्टः सकलसामन्तसंहतिप्रणतीर्यावदङ्गीकुर्वन्नास्त, तावत् स वीरो यथापूर्वं खड्गहस्तो देदीप्यमानविग्रहो नभस्तलादवतीर्य राज्ञः कण्ठे सुरतरुकुसुमनिर्मितां परिमळलुब्धमधुकरनिकुरुम्बानिरन्तरामम्लानां दिव्यमालां समर्प्य महेन्द्रसन्देशं तस्मै निवेद्य नानाविधप्रथनानुबद्धाः कथाः कथयितुमुपाक्रंस्त । ततः सर्वाऽपि सभा विस्मिता जाता । तदा वीरोऽवदत्—"अहमितो निर्गत्य स्वर्गं गतोऽस्मि किल । तत्र देवानां दैत्यानां च महान् सङ्ग्रामः प्रवृत्तः । तत्र च मया बहवो दानवा निपातिताः । केचन कान्दिशीका आसन् । एवं सङ्ग्रामे सकाम एव संवृत्ते, देवः सहस्रलोचनः सप्रसादं मामवलोक्यावदत्—'अये वीर, चिराद्दृष्टोऽसि । एतावन्तं कालं कुत्र स्थितोऽसि?' ततोऽवादिषम्—'स्वामिनः शापादेतावन्ति दिनानि भूलोके स्थितोऽस्मि । अद्य स्वामिनो दैत्यैः सह युद्धं प्राप्तमाकर्ण्य साहाय्यार्थमागतः ।' तदा परं प्रसन्नचित्तो महेन्द्रः 'अये इदम्प्रथमं मध्यमलोकं मा गच्छतात् । संप्रति तवाहं प्रसन्नोऽस्मि । गृहाण कनकवलय' मिति स्वकरान्मणिकङ्कणमुन्मुच्य मम हस्ते स्वयमेवाचकलत् । पुनरहं 'भोः स्वामिन्, अहमत्रागच्छन् विक्रमार्के भार्यां निक्षिप्यागतोऽस्मि । तां गृहीत्वा झडिति पुनः समागमिष्यामि देवपादमूल'मिति विज्ञाप्य समागतोऽस्मि । तत् क्व मे प्रेयसी? प्रेष्यताम् ।" राजा तद्वचनं श्रुत्वा विस्मयं गत्वा तूष्णीमभूत् । ऐन्द्रजालिकः—'राजन्, किमिति जोषमास्यते?' तदा सभ्यः कश्चिदाह—'तव भार्याग्निं प्रविष्टा ।

ऐन्द्रजालिकः—हन्त! किमेतत्?' सर्वे परस्परवदनानि विलोकयन्तो निरुत्तरीभूता आसन् । तदैन्द्रजालिकः—'भो राजवतंस, परदार-सहोदरः सकलार्थिलोककल्पतरुश्चेति महतीं कीर्तिमासाद्य मम प्राण-प्रियामन्तःपुरे संगोप्य किमर्थं तूष्णीं स्थितोऽसि? किमेतदपचरितम्?' इत्युक्तवति तस्मिन्, राजा संकुचितमनाः शुद्धान्तचरान् सौविदल्ला-नाहूयावादीत्—'सौविदल्लाः, सत्यं ब्रूत । किमस्य दयितान्तर्वर्तते?' सौविदल्लाः—'स्वामिन्नस्मज्जनन्या देव्या सल्लपन्ती सुखमास्ते' राजा—'तर्ह्येवानयत ।' ततस्ते महाप्रसाद इति सत्वरमन्तः पुरं प्रविश्य तामानैषुः । राजा तां दृष्ट्वा सामाजिकैः सह महान्तं विस्मय-मवाप्नोत् । अत्रान्तरे स वीरः स्थित्वास्तावीत् । "जय महाराज, सकलमहीपालमकुटकोटिमणिकिरणपाटलितपादपीठ, जय, निरर्गल-दानोदकधारापूरप्लवमाननिखिलमार्गण, विक्रम, वसुन्धराधुरन्धर, अहमैन्द्रजालिकः । मयैतदिन्द्रजालविद्यालाघवं दर्शितम् ।" राजा परमाश्चर्यतरङ्गितान्तरङ्गोऽभूत् । तस्मिन् समये भाण्डारिक आगत्या-भाणीत्—'भोः स्वामिन्, पाण्ड्यराजेन स्वामिने करः प्रेषितः ।' राजा—'किं प्रेषितम्' भाण्डारिकः—"देव,

अष्टौ हाटककोटयस्त्रिणवतिर्मुक्ताफलानां तुलाः
पञ्चाशन्मदगन्धलुब्धमधुपा धौरन्धराः सिन्धुराः ।
अश्वानां त्रिशतं चतुर्दश रथाः पण्याङ्गनानां शता-
न्येतद्विक्रमभूमिपाल भवतस्तत्पाण्ड्यराट्प्रेषितम् ॥ ३२३॥

ततो राजा सर्वमैन्द्रजालिकाय दीयतामित्यादिक्षत् । तदा तेन तत्सर्वं तस्मै दत्तम् ।

इमां कथां कथयित्वा सालभञ्जिका भोजराजमब्रवीत्—'भो राजन्, ईदृशमौदार्यं विद्यते चेदुपविश ।' तच्छ्रुत्वा भोजराजो व्रीडितस्तूष्णीं गृहं गतः ।

इति त्रिंशोपाख्यानम् ॥

---

## अथैकत्रिंशोपाख्यानम् ॥

अत्रायं मतिकौशलाद्विलसतो बेतालतः स्वां मृतिं
दूरेऽपोह्य ततश्च हन्तुमनसं संहृत्य दिग्वाससम् ।
बेतालं स्ववशंवदं च कलयन्नष्टौ च सिद्धीः पराः
प्राप्योद्दामयशाः शशास वसुधामित्येवमाभाषते ॥ ३२४॥

पुनरप्येकदा राजा सिंहासनमारोढुमाजगाम । तावदन्या पाञ्चालिका जगाद—'भो महीवल्लभ, विक्रमार्कसदृशमेव वहेरिति महेन्द्रेण दत्तादेशमिदमासनम् । तदीया मङ्गलगुणास्त्वय्यपि यदि, काममुपविश ।' राजा—'भोः सालभञ्जिके, कथय तस्य भव्य-गुणान् ।' प्रतिमा—राजन्, श्रूयताम् ।

विक्रमार्के राज्यं कुर्वत्येकदा कश्चिद्दिगम्बर आगत्य,

'श्रीशो ददातु भगवान् भक्तानां वः समीहितम् ।
यद्भक्तिः शुल्कतामेति मुक्तिकन्याकरग्रहे ॥ ३२५॥

ध्यानव्याजमुपेत्य चिन्तयसि कामुन्मील्य चक्षुः क्षणं
पश्यानङ्गशरातुरं जनममुं त्राताऽपि नो रक्षसि ।
मिथ्याकारुणिकोऽसि निर्घृणतरस्त्वत्तोऽस्ति कोऽन्यः पुमान्
सेर्ष्यं मारवधूभिरित्यभिहितो देवो जिनः पातु वः ॥ ३२६॥

यच्चापगा श्रीः सदनं सुराणां यन्मन्दुरा पद्मभुवो मुखानि ।
यत्तूर्णमम्भोधरपानभूमिर्देवः स भूयाद्भवतां शिवाय ॥ ३२७॥

एकं ध्याननिमीलनामुकुळितं चक्षुर्द्वितीयं पुनः
पार्वत्या वदनाम्बुजे मदलसद्भृङ्गायितं यस्य वै ।
अन्यद्दूरविकृष्टचापमदने क्रोधानलोद्दीपितं
शम्भोर्मङ्गळदं समाधिसमये नेत्रत्रयं पातु वः ॥' ३२८॥

इत्याशिषमुक्त्वा राज्ञो हस्ते फलमेकमदात् । अथ राजनिर्दिष्टमासनमध्यासीनो वाचमेवमुदञ्चयामास—'राजन्, अहं मार्गशीर्षचतुर्दश्यां निशि श्मशाने हवनं करिष्यामि । भवान् हि परोपकारी, महासत्त्वाधिकश्च, तद्भवतु मामकहवनसहकारी ।' राजा—'मया किं कर्तव्यम् ?' दिगम्बरः—'महाश्मशानस्यानतिदूरे शमीपादपमूले कश्चिद्वेताळो वरीवृत्यते । स त्वया मौनेन समानेतव्यः ।' राजा ओमित्युररीचकार ।

क्षपणकः कृष्णचतुर्दश्यां होमद्रव्याणि संगृह्य महाश्मशानवाटमगाहत । राजाऽपि कृपाणपाणिर्महाश्मशानं विवेश । तत्र च दिगम्बरो बेताळपरिग्रहार्थं शमीमहीरुहमदर्शयत् । तेन च मार्गेण भूरुहं तं प्राप्य बेताळं स्कन्धे गृहीत्वा श्मशानमार्गे समागच्छति भूपाले बेताळो जगाद—'भो राजन्, मार्गश्रमापनयाय कापि कथा कथ्यताम् ।' राजा मौनभङ्गभयात् तूष्णीं जगाम । पुनर्बेताळः 'कथां न कथयसि । मौनभङ्गभयान्न जल्पसि । तर्ह्यहं कथयामि । कथाऽवसाने मम प्रश्नस्योत्तरं ज्ञात्वाऽपि मौनभङ्गभयान्न कथ-

यिष्यसि चेत्, तव शिरः सहस्रधा फलिष्यति ' इति भणित्वा कथां कथयितुमारेभे ।

भो राजन्, श्रूयताम्—दक्षिणेन हिमवन्तं विन्ध्यवर्ती नाम नगरी । तत्र सुविचारो नाम राजा वसति स्म । तस्य पुत्रो जयत्सेनः । स एकदाऽऽखेटनाय महदरण्यमवगाह्य तत्र करिणमेकं दृष्ट्वा तमनुधावन् सुदूरमतिपपात । अथ कथञ्चिन्नगरमार्गमुपलक्ष्य मन्दं मन्दमेकाकी समागच्छन् मध्ये कामपि तरङ्गिणीमद्राक्षीत् । तत्र तीरे कश्चिद्ब्राह्मणोऽनुतिष्ठन्नतिष्ठत् । राजपुत्रस्तत्समीपं गत्वाऽवदत्—'भो ब्राह्मण, यावदहं जलं पिबामि, अमुमश्वं गृहाण । ' ब्राह्मणः—किं तव प्रेष्योऽहमश्वं गृहीतुम् ?' ततस्तेन कशया ताडितो ब्राह्मणो रुदन् राजसमीपमागत्य सर्वं वृत्तान्तं निवेदयामास । स राजापि तच्छ्रुत्वा रोषारुणलोचनः पुत्रं स्वदेशान्निर्वासयितुमियेष । तस्मिन्नवसरे सचिवः प्राह—'देव, राज्यभारोद्वहनयोग्यं कुमारं किमिति देशान्निर्वासयसि ? नैतदुचितं मन्ये । ' राजा—"सखे समुचितमेवेदमस्य मन्ये, यद्ब्राह्मणं कशया जघान । बुद्धिमता पुरुषेण ब्राह्मणद्वेषो न कार्यः । उक्तं च—

न विषं भक्षयेत् प्राज्ञो न क्रीडेत् पन्नगैः सह ।<br>
न निन्देद्योगिवृन्दं च ब्रह्मद्वेषं न कारयेत् ॥ ३२९॥

भो मन्त्रिन्, किं त्वया न श्रुतानि पुराणानि ? पुरा ब्राह्मणशापादीश्वरस्य लिङ्गं पपात । तथा च—

अत्युन्नतपदं प्राप्तः पूज्यं नैवावमानयेत् ।<br>
नहुषः शक्रतां प्राप्तश्च्युतोऽगस्त्यावमानतः ॥ ३३०॥

अतो ब्राह्मणाः सर्वेऽपि पूजनीया एव । उक्तं च—

द्विजाश्च नावमन्तव्यास्त्रैलोक्येश्वरपूजिताः ।
देववत् पूजनीयास्ते दानमानार्चनादिभिः ॥ ३३१॥

यैः कृतः सर्वभक्ष्योऽग्निरपेयः स महोदधिः ।
क्षयी च स कृतश्चन्द्रः कोनष्टो विप्रकोपनात् ॥ ३३२॥

यतः सोमं सदाऽश्नन्ति हव्यानि त्रिदिवौकसः ।
कव्यानि चैव पितरः किं भूतमधिकं ततः ॥ ३३३॥

तथाच—

ये पूजिताः सुराः सर्वे मनुष्याश्चैव भारत ।
तपोव्रतधना ये च कस्तान् जगति नार्चयेत् ॥ ३३४॥

पूर्वं पीतः समुद्रो यैर्विन्ध्यो यैर्विनिपातितः ।
यैश्चापि देवताः पुष्टाः किंभूतमधिकं ततः ॥ ३३५॥

य एवं देवमन्विच्छेदाराधयितुमव्ययम् ।
सर्वोपायैः प्रयत्नेन संतोषयतु स द्विजान् ॥ ३६६॥

तथा च द्वारवत्यां भगवता कृष्णेनाप्युक्तम् ।

घ्नन्तं शपन्तं परुषं वदन्तं यो ब्राह्मणं नार्चयते तथा माम् ।
स पापकृत् ब्रह्मदवाग्निमध्ये वध्यश्च दण्ड्यश्च न चास्मदीयः ॥

किंच—

यश्च मां परया भक्त्या ह्याराधयितुमिच्छीत ।
तेन पूज्या द्विजाः सम्यगेवं तुष्टो भवाम्यहम् ॥ ३३८॥

इत्युक्त्वा पुनः 'अनेन दुरात्मना येन हस्तेन ब्राह्मणस्ताडितः तस्यच्छेद एव प्रतीकारः' इति करच्छेदं निर्णिनाय । तावदेव ब्राह्मणः

समागत्य तं राजानमभाणीत्—भो राजन्, सुतो बालिशस्तथा कृतवान् । अद्य प्रभृतीदृशमनुचितं न कुर्यात् । आद्योऽयमपराधो मर्षणीयः । अहं पुनर्मर्षयाम्येन' मिति । तस्य वचनं श्रुत्वा राजा स्वपुत्रं विससर्ज । ब्राह्मणोऽपि यथागतमगात् ।

इति कथां कथयित्वा बेताळः प्राह—'यदि जानासि, ब्रूहि । अनयोः ब्राह्मणभूपालयोः गुणाधिकः कः?' राजा—'भूपाल एव गुणाधिकः ।' तच्छ्रुत्वा मौनभङ्गो जात इति बेताळः शमीतरुमाजगाम । राजापि पुनस्तत्र गत्वा तं स्कन्धे समारोप्य यावदाजगाम, तावत् पुनरपि कथां कथयति स्म । एवंविधाः कथाः पञ्चविंशतिं कथयामास । ततो बेताळो विक्रमस्य बुद्धिकौशलं कथाग्रहणवैदग्ध्यं कृपारसौदार्यादिमांश्च गुणान् निरीक्ष्य तस्मिन् प्रसन्नो भूत्वा विक्रममवादीत्—'भो राजन्नयं दिगम्बरस्त्वां हन्तुं प्रयतते ।' राजा—'कथमिव?' बेताळः—"यदा त्वं मां तत्र नेष्यसि, तदा स एवं त्वां वदिष्यति—'भो राजन्, त्वमतिश्रान्तोऽसि । इदानीमिदमग्निकुण्डं प्रदक्षिणीकृत्य दण्डवत् प्रणम्य निजस्थानं गच्छ ।' इत्युक्तस्त्वं प्रणामं कर्तुं नम्रो भविष्यसि । तदा दिगम्बरः खड्गेन भवन्तं प्रहृत्य तावकेन मांसेन होमं कृत्वा पूर्णाहुतिं विधाय तत्र होमे ब्रह्माणं मां कृत्वा सर्वमेवेदं कर्म ब्रह्मार्पणं करिष्यति ।" एवं कृतेऽस्य दिगम्बरस्याणिमाद्या अष्टसिद्धयो भविष्यन्ति ।" विक्रमः—'सखे, किमहं करवाणि? बेताळः—"त्वमेवं कुरु । यदा स दिगम्बरस्त्वां नमस्कर्तुमादेक्ष्यति, तदा 'अहं सार्वभौमः, सर्वे राजानो मामेव प्रणमन्ति, मया प्रणामः कदापि न कृतः । तदहं न जाने । त्वं प्रथमं

प्रणाममनुष्ठाय दर्शय । अनन्तरमहं करिष्यामी'ति ब्रूहि । ततः स यदा प्रणामं कर्तुं नम्रो भविष्यति, तदा त्वं तस्य शिरश्छिन्द्याः । अहं तव ब्रह्मा भूत्वा हवनं पूरयिष्यामि । तवाष्टौ महासिद्धयो वशंवदा भविष्यन्ति ।' इत्युक्तो राजा तथैव कृतवान् । ततो बेताळः स्वयं निर्वर्त्य हवनं, दिगम्बरस्य शिरःपूर्णाहुतिं कृत्वा, सर्वं ब्रह्मार्पणं विधाय, अणिमादीरष्ट महासिद्धी राजसात् कृत्वा जगाद—'भो विक्रमार्क, महीपाल, तवाहं प्रसन्नोऽस्मि, वरं वृणीष्व ।' राजा—'यदि मम प्रसन्नो जातोऽसि तर्हीमं दिगम्बरं समुद्धर । यदाहं तव स्मरिष्यामि, तदा त्वमागन्तुमर्हसि ।' स तथेति प्रतिज्ञाय दिगम्बरं समुद्धृत्य निजनिवेशं प्रविवेश । राजा विक्रमोऽपि तस्मै दिगम्बराय ता अष्ट महासिद्धीर्दत्त्वा स्वनगरं विवेश ।

इति कथयंत्यां साळभञ्जिकायां भोजराजः 'सत्यमाह भवती, नाहं विक्रमार्कस्य शततमीं कळामर्हामि । मुधैवायमुद्यमोऽनया बहुवारमकारि ।' इति विरराम ॥

इत्येकत्रिंशोपाख्यानम् ।

---

## ॥ अथ द्वात्रिंशोपाख्यानम् ॥

श्रीधारापुरधूर्वहे गुणनिधौ भोजक्ष्मावल्लभे
भूयोऽपि स्पृहया समेत्य शनकैरारोढुमुत्कण्ठिते ।
साटोपं प्रतिमा निवार्य चरमा सिंहासने जाग्रती
मुख्यान् विक्रमराजशेखरगुणानाख्याति लोकोत्तरान् ॥ ३३९॥

श्रीभोजराजे ज्ञात्वाऽपि पुनरागते चरमा सालभञ्जिका जगाद—'हन्त! कथमियं ते दुराशा! निवृत्तकामोऽपि पुनरागतोऽसि। अद्यापि समाकर्णय श्रीविक्रमार्कगुणान्' भोजः—अयि सालभञ्जिके, क्षमस्व, भूयोऽपि कथय तस्य चारित्रं गुणांश्च।' सालभञ्जिका—भो राजन्, श्रूयताम्।

विक्रमार्कस्य सदृशं कमपि न पश्यामि। यः काष्ठमयखड्गेन चतुरकूपारपरिक्षिप्तक्षितितलगतान् नरपतीन् विजित्य निःसपत्नं राज्यं कृतवान्। यः परेषां शकं निराकृत्यात्मशकं वर्तयामास। समस्तदुर्जननिराकरणं समस्तयाचकलोकदुर्गतिहरणं अवग्रहनिरसनं चैतत् सर्वमपि विक्रमो महीमण्डले निरवशेषं कृतवान्। ततस्तत्समः पुरुषो नास्ति। एवंविधसत्त्वसाहसौदार्यधैर्यादिगुणास्त्वयि विद्यन्ते यदि सिंहासनेऽस्मिन्नुपविश।

तच्छ्रुत्वा राजा तूष्णीमवतस्थे।

इति द्वात्रिंशोपाख्यानम्॥

---

अत्रान्तरे काचन पुत्रिका चित्रार्पितमिव त्रपाभरादवस्थितं भोजमवादीत्—"भो भोजराज, भवानपि विक्रमार्कप्रतीकाश इत्येव मन्ये, यतो युवां द्वावपि नरनारायणात्मधारिणौ। इदानीं त्वत्तः पवित्रचरित्रः सकलकलाप्रवीणः शौर्यौदार्यादिसुगुणभूषणो राजा नास्ति। अतस्तव प्रसादादस्माकं द्वात्रिंशतः पुत्रिकाणां पापपरिहारो जातः। शापाद्विमुक्ताः स्मः।" तदा भोजः—'कथं वः शापो जातः? तन्मूलं कथय।' पुत्रिकाऽकथयत्—भो राजन्, श्रूयताम्।

वयं द्वात्रिंशत् सुराङ्गनाः, पार्वत्या वयस्याः, तस्याः परमप्रेमास्पदीभूताः, प्रत्येकमस्माकं नामधेयानि श्रूयन्ताम्—सुकेशी, प्रभावती, सुप्रभा, इन्द्रसेना, अनङ्गजया, इन्दुमती, कुरङ्गनयना, लावण्यवती, कामकारिका, चन्द्रिका, विद्याधरी, प्रबोधवती, निरुपमा, हरिमध्या, मदनसुन्दरी, विलासरसिका, मन्मथसञ्जीविनी, रतिलीला, मदनवती, चित्ररेखा, सुरतगह्वरा, प्रियदर्शना, कामोन्मादिनी, चन्द्ररेखा, हंसप्रबोधा, कामशरोन्मादिनी, सुखसागरा, मदनमोहिनी, चन्द्रमुखी, लावण्यलहरी, मरालगमना, जगन्मोहिनी च। एता वयमेकदा कुत्रापि रजतशिलातले समुपविष्टाः किमपि किमपि सल्लपन्त्यः सुखमास्म। तदा परमेश्वरः सानन्दमस्मासु रागरमणीयां दृष्टिं न्यवेशयत्। तत्रान्तरे तं दृष्ट्वा देवी पार्वती सकोपास्मानेवमशपत्—'भवत्यो निर्जीवाः पुत्रिका भूत्वा वासवसिंहासने तिष्ठन्तु' इति। ततोऽस्माभिः प्रणिपत्य शापावसानं याचिता देवी कृपारसार्द्रान्तः करणाऽस्मानवदत्—'कलियुगे विक्रमादित्यस्तत्सिंहासनमिन्द्रलोकाद्भूमिं नेष्यति। तदा तस्मिन्नुपविष्टः स राजचूडामणिर्बहूनि वर्षाणि राज्यं परिपालयिष्यति। तस्मिन् परलोकगते कस्मिंश्चित् पवित्रे क्षेत्रे तदासनं सचिवा निवेशयिष्यन्ति। ततः कतिपयैर्दिवसैस्तद्भोजराजहस्तगतं भविष्यति। ततस्तन्नगरं नीत्वा प्रतिष्ठाप्य तदारोढुं यदा भोजभूपालः समायास्यति, भवतीभिः सह सँल्लापं करिष्यति। तदा विक्रमार्कचरित्रं भोजराजाय कथयत, यूयं शापाद्विमोक्ष्यध्वे' इति।

इति निजवृत्तान्तमुक्त्वा पुनरपि भोजमवदन्—'भो राजन् वयं प्रसन्नाः स्मः । वरं वृणीष्व ।' तदा भोजः—"मम किं नामापेक्षणीयम्? संपूर्णकामोऽस्मि । तथापि परोपकारार्थं किमपि मया प्रार्थ्यते ये मर्त्या एतच्चरित्रं शृण्वन्ति लिखन्ति वा तेषां प्रौढप्रतापकीर्तिधैर्यौदार्यादिगुणाः प्रवर्धन्ताम् । एतच्चरित्रमाकल्पमविच्छिन्नं महीमण्डले वर्तताम् । श्रोतॄणां भूतप्रेतपिशाचशाकिनीढाकिनीमारीयक्षराक्षसादिभयं मनागपि मा भूत् । व्याघ्रभल्लूकप्रमुखशरारुनिकरादपि भीतिर्मा जायताम् ।" इति प्रार्थिताः सालभञ्जिका यथाभिलषितमस्त्विति राज्ञे वरं दत्त्वा सर्वा अपि परिगृहीतसुरसुन्दरीविग्रहा दिवमुत्पेतुः ।

ततो भोजराजस्तत्सिंहासनं विचित्रहाटकानर्घनवमणिखचिते प्रासादशिखरे संस्थाप्य तदुपरि परमेश्वरं निधाय देवं सिंहासनं च प्रतिदिनमर्चयन् सुखेन महीं सुचिरं शशास ॥

श्रीमतो विक्रमार्कस्य चरित्रं महिमोत्तरम् ।
द्वात्रिंशत्प्रतिमाप्रोक्तं समाप्तिमगमत्तराम् ॥ ३४०॥

इति विक्रमार्कचरितं समाप्तम् ॥

# विक्रमार्कचरित्रस्थकठिनपदानां अकाराद्यनुक्रमणिका आंग्लानुवादसहिता ॥

## (GLOSSARY.)

Page.

### अ

**अग्रणी** leader 4
**अङ्क** lap 20
**अ-दीर्घसूत्र** not working slowly ; quick. 31
**अद्यतन** pertaining to to-day 87
**अनर्घ** priceless 41
**अनृत** false 4
**अप्रज** childless 69
**अभणत्** imperfect of **भण्** told 12
**अभ्रंलिह** touching the clouds (very high) 104
**अमल** free from dirt, pure 6
**अमूल्य** priceless 33
**अर्क** the sun plant 121
**अलक्तक** red lac 17
**असूर्यम्पश्य** not seeing even the sun 15
**अहि+इन-मालिका** garland of serpent king
**अ-हीन-मालिका** a superior garland.

Page.

### आ

**आकारित** invited 7
**आतर** fare for being ferried over a river ; freight 49
**आपगा** river 16
**आपृच्छ्य** taking permission 8
**आमुष्मिक** belonging to the next world 92
**आरूढिक** elevated or ascended 25
**आरुरोह** imper. of **रुह्** with **आ** ascended 12
**आशय** mind 7

### इ

**इत अम्बर** without clothes, naked 5
**इदानीं** now 5
**इष्ट** worshipped 73

### उ

**उत्तरसाधक** assistant 12
**उत्तितीर्षु** desirous of ascending 73

PRINTED BY V. RAMASWAMY SASTRULU & SONS,
AT THE 'VAVILLA PRESS,' MADRAS.—1932.